# मुखबन्धः

योगाश्रमाणा शेखरायमाणो विश्वविश्रुत श्रीअरविन्दाश्रम किल विदितवेदितव्यस्य कस्य न विदित । कस्य न वा बहुश्रुतस्य श्रुतिपथमुपेता तस्य साक्षादात्मभूताऽर्चनीयचरणा तदाचार्या, अध्यात्मविद वन्दनीया भगवती 'मिरा'ऽभिधाना श्रीमाता। सर्वभूतहितसभृतस्वान्तायास्तस्या 'बेरल्-ज़िस्त्वार (Belles Histoires)'-समाह्वयस्य फ्रेंचभाषापुस्तकस्य सस्कृतरूपान्तरत्वेन कलिता सदुपदेशगर्भविविधकथानकसवलिता ललितेय कृति 'कथामञ्जरी' सुरभारतीसमाराधनतत्पराणा साहित्यरसिकाना पुरस्तादुपन्यस्यते। विशेषत श्रीअरविन्दाऽन्ताराष्ट्रियविश्वविद्यालयस्य विद्यार्थिनामर्थेऽवतारितेय त्रिदशभाषानुशीलनबद्धश्रद्धाना सर्वासामपि शिक्षासस्थानामुपयोगाय कल्प्स्यतीत्यस्मदाशसा।

अथ चाऽस्या या कथा उपन्यस्तास्ता हि न सामान्यकथा इव मनोरञ्जनमात्रप्रयोजना, नाऽपि पञ्चतन्त्र-हितोपदेशादिपुस्तकोपनिबद्धनीतिकथा इव ससारज्ञान-प्रज्ञापनैकसारा व्यवहारकौशल-विशकलन-कुशला कूटनीति-सकीर्तनैकपरा वा, प्रत्युत सत्य-सत्साहस-स्वावलम्बनाऽऽत्मसयमधैर्याध्यवसायादिसद्गुणप्रेरणाप्रदान-प्रवणा विद्यार्थिना चरित्रनिर्माणोपयोगिन्यश्च सन्तीति नो धारणा। तथा च लेखिकाया एव श्रीमुखतो विनिर्गता वाग् विवृणोत्यासा रहस्यम्—

"एतासा कथाना सकलनस्योद्देश्यमिदमेव यदेतदनुशीलनेन बाला स्वात्मान वेत्तु सत्यसौन्दर्ययो सरणिञ्चानुसर्त्तुं शक्नुवन्तु इति"।*

---

*Ces histoires ont ete ecrites pour aider les enfants a se trouver eux-mêmes et a suivre un chemin de rectitude et de beaute

Fevrier 1950 — La Mere

विशदमेवेदमेतेन यदिमा शाश्वतिकमहत्त्वेन शालन्त इति। अतश्चैता सम्यगधीता जीवनेऽनुशीलिताश्च न केवल बालानामपि तु वयस्थानामपि श्वश्रेयसाय स्युरिति नात्र लेशोऽपि सशयस्य।

पुस्तकेऽस्मिन् बालाना सुखबोधार्थं सुखसुखार्थञ्च सन्धिरस्माभिर्नादृतोऽनेकत्र। अस्ति च समय —'स चान्यत्र विवक्षया' इति।* तथापि प्रायश सर्वेषामपि सन्धिनियमाना निदर्शनानि यत्र तत्र प्रदर्शितान्येव। तानि च सकेतपरिशीलनपटूना वटूना सहिताप्रयोगबोधार्थमुपयोगीनि पर्याप्तानि च सेत्स्यन्ति।

पुस्तकस्यान्ते शब्दकोष विशेषविवरणञ्चोपन्यस्ते। तत्र विशेषविवरणे विषमाणा पदवाक्याना, द्राघीयसा समासाना, दुरूहाणा धातुरूपाणाञ्च विवृतिरनवद्यया पुरातनपद्धयोपनिबद्धा। शब्दकोषे च सहस्राधिकाना दुर्बोधपदाना सरलपर्याया अमर-विश्व-मेदिनी-शाश्वतप्रभृतिकोषप्रमाणसहिता प्रस्तुता। प्रमाणानामसगताशोऽपि श्लोकस्मृतौ सहायकत्वात् समुदाहृतोऽनेकत्र। पर भ्रान्तिनिरासाय स कोष्ठकाभ्यन्तरे प्रदर्शित। कोषेष्वनुपलब्धाना शब्दानामपि सरलार्थमुपन्यस्य तस्यार्थस्यैव पर्यायान्तरनिर्देशिका प्रमाणपङ्क्ति कोषादवतारिता पर्यायबोधनार्थम्। प्रमाणानि च प्रायेणामरकोषादेव समुद्धृतानीति बोध्यम्। अतश्च तत्प्रमाणाना पुरत कोषनामनिर्देशो न विहित। तदितरकोषप्रमाणानि तु सकोषनामनिर्देश समुल्लिखितानि।

इत्थञ्चैतच्छब्दकोषसवलित विशेषविवरण न केवल परीक्षाम्बुधितितीर्षूणा विद्यार्थिनामुपयोगाय भवेत्, अपि त्वध्यापकानामपि शिक्षणकर्मणि साहाय्य सपादयेदिति नो बलीयान् विश्वास।

सेयमीदृशी कृतिर्देववागनुरागिणा विदुषा परितोषमावहेदित्याशसते तेषामाश्रव अनुवादक

---

*सन्धिरेकपदे नित्यो नित्यो धातूपसर्गयो।
समासेऽपि च नित्य स्यात् स चान्यत्र विवक्षया।।

# विषयानुक्रमणी


| | विषय | पृष्टाङ्क |
|---|---|---|
| | मुखबन्ध | (क—ख) |
| १ | आत्मसयम | १ |
| २ | सत्साहसम | ९ |
| ३ | प्रफुल्लता | २१ |
| ४ | स्वावलम्बनम् | २६ |
| ५ | धैर्यमध्यवसायश्च | ३२ |
| ६ | सरलजीवनम् | ३८ |
| ७ | दूरदर्शिता | ४६ |
| ८ | सत्यनिष्ठा | ५२ |
| ९ | यथार्थनिर्णय | ६८ |
| १० | व्यवस्था | ७६ |
| ११ | विरचनञ्च विनाशनञ्च | ८४ |
| | विशेषविवरणम् | ९२ |
| | शब्दकोष | १८२ |

१

# आत्मसंयमः

शक्नुमो वय विनेतु वन्यमश्वम्, न पुनर्वाहयितु व्याघ्रम्। कुत ? अस्ति हि व्याघ्रे क्रूरैका दुर्दमनीया शक्ति । अत एव तस्मात् कमपि सद्व्यवहार नाशास्महे, भवामश्च बाध्या इव तं निहन्तुम्, न सोऽस्माकम् अत्याहितमाचरेदिति।

परन्तु, भवतु नाम वन्योऽश्वो दुर्दान्तश्चमत्कृतश्चादौ तथापि स स्वल्पेनैवायासेन धैर्येण च पार्यते विनेतुम्। कालेन च सोऽस्मदादेशमनुसर्तु स्नेहितुमपि चास्मासु शिक्षते। अन्ते च निजमास्य स्वयमेव पुरस्करोति कविका-ग्रहणाय।

भवन्ति ननु मानुषेऽप्युच्छृङ्खला दुर्दमाश्च प्रवृत्तयो वासना वा याश्च कदाचिदेव व्याघ्रवदशक्यवशा। प्रायेण तु ता वन्याश्वा इव नियन्त्रणखलीनमपेक्षन्ते। तदेव च नियन्त्रणेषु सर्वोत्तम येन स्वय निजप्रवृत्ती र्निगृह्णाति नर । तच्च आत्मसयमाभिधानम्।

*

आसीत् हुसैनो नाम ईशदूतस्य मुहम्मदस्य पौत्र । नितरामभिराम तस्य भवन प्रभूतश्च वित्तकोष। अपराध्यति चेत् तस्मै कश्चिद् वराक, आढ्याय अपराध्यति स खलु। दुर्वहश्च आढ्यस्य क्रोधः।

अथ कदाचिदुष्णजलपात्रपाणि कोऽपि दासो भुञ्जान हुसैनम् अनुनिर्जगाम। दुर्दैववशाद् यदृच्छयोच्छलित किञ्चित् सलिलम् ईशदूतमुहम्मदस्य पौत्रमपि पस्पर्श, जगर्ज च स रोषेण। दासस्तु सहसा जानुभ्या भूमिगत प्रत्युत्पन्नमतितयाऽवसरोचित स्मृत्युपस्थितं कुरानग्रन्थस्य पद्यमेकमुच्चचार—

"स्वर्गस्तेभ्यो यैर्जित क्रोधवेग—"

तद्वचनप्रभावितो हुसैनोऽन्तरैवाक्षिप्य—"नाह कुपित" इति प्रत्यवदत्।

"तेषाञ्चार्थे ये क्षमन्ते मनुष्यान्", दासोऽविरतमुदीरयामास।

"क्षमेऽह त्वाम्", हुसैन समवोचत्।

"यस्मादल्ला स्नेहसिक्तो दयार्द्र" इत्थ दासोऽपूपुरत्।

एतावति सलाप एव हुसैनस्य रोष सर्वात्मना प्रशशाम। प्रशान्तरोष स्वस्थचेताश्च स दासमुत्थाप्य अचकथत्—

"स्वतन्त्रस्त्वमित प्रभृति, त्वदर्थमिद च शतचतुष्टय रजतमुद्राणाम्।"

स एष पन्था येन हुसैन समुदाराममपि सुलभकोपामात्मनो मनोवृत्ति नियन्तुमशिक्षत। अभिजाता हि तस्य वृत्तिर्नैव कुत्सिता न वा क्रूराऽवर्तत, अत एव च सा वश्या अभवत्।

*

बालका ! एवमेव यदि कदाचिद् युष्माक पितरो गुरवो वा युष्मान् स्वात्मान शासितुमाचक्षते, तर्हि नायमाशयस्तेषा यल्लघवोऽलघवो वा युष्माक दोषा न कथमपि स्वय प्रतीकारार्हा, अपि तु मेधावि तेजस्वि च वस्स्वान्तमाजानेयकिशोरवत् केवल नियन्त्रणसापेक्षम्।

प्रासाद-पर्णकुटीरयो कतरो वो रोचिष्यते स्वाऽऽवासतया स्वीकर्तुम् ? प्रासाद इत्यसन्देहम्।

एव किलानुश्रूयते यत्कदाचित् स्वर्गलोकमवलोकयितु गतो हजरतमुहम्मदस्तत्रोच्चभूमौ विनिर्मितान् अशेष त प्रदेश शासत इव च कतिचन महत प्रासादान् ददर्श।

"अयि गेब्रियल् !" स्वात्मान स्वर्ग दर्शयमान देवदूत मुहम्मद पप्रच्छ, "केषा कृते रचिता एते प्रासादा ?" इति।

देवदूत प्रत्यवदत्, "तेषामर्थे ये मन्युमात्मनो विनयन्ते जानन्ति च निजावमन्तारमपि क्षमितुम्।"

यत्सत्य सप्रसाद निर्वैर च मनो यथार्थप्रासाद इव विभासते, सावेश प्रत्यपकारपर तु न तथा। सदनमेवाऽस्माक मानस यत्खलु वय यथाकाम शुभ्र शान्त सुन्दर सुमधुरस्वरसमन्वित वा सविधातु परिदेवनस्वनैर्विस्वरारावैश्च आकीर्णाम् अन्धकारावृता भयावहा गुहामिव वा कर्तु क्षमा।

*

उत्तरफ्रासस्थपुरस्यैकस्य कश्चिद् बालको मम परिचित अभूत्। उत्तानहृदयोऽपि कोपनप्रकृति स सर्वदैव रोषावेशविवश इवाऽभवत्।

एकदाऽह तमवोचम्—"वद भो यत् त्वादृशाय हृष्टपुष्टबालाय कि दुष्करतरम्—अवमन्तु सहचरस्य वदने तत्क्षण मुष्टिना प्रतिप्रहार आहोस्वित् तन्मुष्टे स्वात्मन्येव निरोध ?"

"मुष्टेर्निरोध।"

"साधु, वद तावत् त्वादृशस्य वीरबालकस्य किं कर्तुमुचिततरम्—सुकर दुष्कर वा ?"

क्षण विचिन्त्य सविचिकित्समसौ प्रत्यवोचत्—"दुष्करम्"।

"साधु वत्स, इत पर प्राप्ते खल्वीदृशावसरे त्वया यतितव्यम् एतदेब विधातुम्।"

अथ गतेषु केषुचिद्दिवसेषु स युवा मामुपेत्य यथार्थगर्वपुरस्सरमब्रवीत्—"अपारयमह 'कृच्छ्रतर कार्य' कर्तुम्" इति।

"तथा हि, स्वदु शीलताचणो मम' कोऽपि सतीर्थ्य कोपाविष्टो मामताडयत्। अक्षमाशीलो बहुलबाहुबलश्च अहमिति जानन् असौ स्वरक्षायै बद्धपरिकरोऽभवत्। तदैवात्रभवत्या शिक्षा सहसाऽस्फुरन् मम हृदि। तदनुकूलाचरणे च कठिनतरे प्रतिभासमानेऽप्यहं स्वमुष्टि कोशे न्यवीविशमेव। एतत् कुर्वतैव अन्वभावि मया यन्मम मन्यु क्वाऽपि पलायतेति, दयैव च केवलमवर्तत मम चेतसि स्वसहचर प्रति। तदनु च तस्य हस्तमुपगूहितु प्रसारितो मया स्वहस्त। तेन स तथाऽऽश्चर्यचकितोऽभूद् यथा क्षणमेक व्यात्तवदनोऽवलोकयन्नेवाभवन्मदभिमुखम्, नाशकच्च शब्दमेकमप्युदीरयितुम्। ततश्च सरभसमग्रहीन्मम करम्, न्यपीडयदमु सबलम्, अब्रवीच्च द्रवीभूत इव नितराम्, 'सम्प्रति स्वैर व्यवहर्तुमर्हसि मया सह, सवृत्तोऽस्मि ते शाश्वत सुहृत्'।"

सोऽर्भक स्वक्रोध तथैव न्ययच्छद् यथा खलीफोपाधिधरो हुसैन।

अथ च सन्त्यन्या अपि बह्व्य प्रवृत्तयो या किल सयममपेक्षन्ते।

*

---

[१]... मम कर्मशालासहचर कोऽपि कोपाविष्ट ... इत्यादि मूलपुस्तकानुसारि वाक्य वा समुपादेयम्। —अनुवादक

'अलकोजई'समभिधानोऽरबदेशस्य कवि मंरुस्थलमध्यमध्युवास। एकदाऽसौ नाबाऽभिध सुन्दर तरुमेक ददर्श। तच्छाखाभि स शरासनमेक शराश्च भूरिशो रचयाञ्चकार।

निशाया सोऽरण्ये रासभाना मृगयार्थं जगाम। नचिरादेव तत्र प्रचलत पशुयूथस्य कस्यचित् खुररव शुश्राव शरमेकञ्च विससर्ज। परमसौ प्रत्यञ्चा तथा रहसा चकर्ष यथा स शरोऽन्यतम श्वापद निष्पत्राकृत्य पार्श्ववर्तिन्या शिलाया कस्यामपि साभिघात निपपात। शरस्य शिलाघातशब्द निशम्य मम शरो लक्ष्यादपराद्ध इति मन्यमान अलकोजई द्वितीय बाण मुमोच। एतर्ह्यपि स शर पूर्ववदेव गर्दभस्यैकस्य देह निर्भिद्य शिलामाजघान। अलकोजईरधुनाऽपि निमित्तादपराद्धेषुमिवात्मान मेने, तृतीयचतुर्थपञ्चमाश्च शिलीमुखान् क्रमश पातयन् प्रतिवार तमेव रवमाकर्णयाञ्चकार। पञ्चमे वारे तु सजातरोष स स्वकीयकार्मुक बभञ्ज।

प्रभाते स गर्दभपञ्चकमपि पञ्चत्वमुपगत शिलासमीपे पतितमवलोकयामास।

मनागपि धीरतरो दिनोदय यावत् प्रतिपालयन् स स्वचित्तप्रसाद चाप चारक्षिष्यत्।

*

पर नैतेनेदमवबोद्धव्य केनापि यद्वयमीदृशी शिक्षा बहु मन्यामहे या खल्वस्माक चरित्रस्य समस्तमुत्साह सकलञ्च बलमपहृत्य तद् दुर्बल कुर्यात्। रश्मिभिर्वनवाजी यन्नियम्यते तत् कविकया तस्य वदन छेत्तु दन्तान् वा भङक्तु नैव। यदि वय वाञ्छामो यत्स स्वकार्यं सम्यक् कुर्यादिति तर्हि स प्रग्रहेण तथा नियम्यो यथा

पुरोऽभिगन्तु प्रभवेत्, न तु नितरा दृढाकर्षणेन तस्य गतिरेव निरोद्धव्या।

दुर्भाग्यवशाद् भूयास सन्तीदृशा मानुषा ये किल प्रकृत्यैव एडका इव दुर्बला दृश्यन्ते। मन्दध्वनिरेव तान् यथास्मदिच्छ चालयितुमलम्।

अपरे केचिद् दासस्वभावा जडा निर्वीर्या नितरा निष्प्रभाश्च निभाल्यन्ते।

आबू उस्मान अल-हिरी-महोदयो बभूव स्वीयेन निरतिशय-धैर्येण विश्रुत। स कदाचित् केनापि मित्रेणैकस्मिन्नुत्सवे निमन्त्रितः तत्सदन गत तेन "क्षन्तव्योऽहमद्य, अक्षमोऽस्मि सप्रति भवन्त सभाजयितुम्। ततश्च प्रतिनिवर्तता भवान्। अत्रभवति भगवतोऽनुकम्पा विराजतामजस्रम्" इति निवेदित।

आबू उस्मानो निजगृह प्रत्यागच्छत्। स्ववेश्म प्रविशत्येव तस्मिन् तस्य मित्रं पुनस्तमामन्त्रयितुम् उपागच्छत्।

आबू उस्मान स्वसुहृदमनुसरस्तस्य सद्मनो द्वारमुपस्थित, किन्तु तत्सखस्तत्रैव पुनरपि क्षमामयाचत। इदानीमपि आबू उस्मानो निर्विषाद प्रतिन्यवर्तिष्ट।

घटनेय त्रिश्चतुर्वा जघटे। अन्ते च तद्वयस्यस्तस्मै स्वागत-मगायत् समगदच्च त सर्वेषा समक्षम्—

"आबू उस्मान! भवतो भद्र स्वभाव परीक्षितुमेव मयैव व्यवहृतम्। अभिश्लाघेऽह भवतो धैर्याय विनयाय च।"

"मा स्म प्रशसीर्माम्", आबू उस्मान प्रत्यवोचत्, "यतोऽयं गुणस्तु सारमेयेऽपि प्राप्यते, स खल्वाहूत उपतिष्ठते 'दुत्'कारेण अपसारितश्च पलायते।"

आबू उस्मानो मानुष आसीन्न तु श्वा, तथापि यदसौ न्याय-मात्मसम्मानञ्च नितान्तमवगणय्य यदृच्छयैव स्वसुहृदामुपहासा-स्पदमभूत् तेन न कोऽपि कथञ्चिदुपकृत ।

र्तात्क दीनस्वभावे तस्मिन्नरे काचिदपि वशीकरणार्हा प्रवृत्ति नावर्तत ? अवर्ततैव । सा चैतादृश्यासीद् यस्या सयमन दु साध्य-तम किल । तदविद्यत दौर्बल्य तदीयचरित्रस्य । तस्य कारण चेदमेव यन्नासौ अवेदीन् तद् दौर्बल्य नियन्त्रयितुम् । तेन च प्रत्येक जन स्वेच्छयैव त नुनोद ।

*

आसीत्कश्चित् तरुणवटु प्रतिभया सपन्न । स हि स्वस्य गुणम् अमुमज्ञासीत्, इयेष च त ततोऽपि वर्द्धयितु येन सर्वोऽपि त स्तुवीत इति। एतत् मनसि कृत्वा स देशाद्देशान्तर पर्याट ।

एकस्मादिषुकारात् स इषुनिर्माण शिशिक्षे ।

किञ्चिदग्रतो गत्वा स नौरचना तच्चालनकला च विनिन्ये तद्विद ।

एकत्रासौ स्थापत्यकलामाकलयामास ।

अपरत्र च काश्चिदितरा कला अभ्यस्तवान् ।

इत्थमसौ षोडश देशान् परिबभ्राम । तत स्वगेह प्रत्या-गत्य सदर्पातिशय बभाषे, "को नाम मादृशो गुणी ब्रह्माण्डमण्डले-ऽस्मिन् ?" इति ।

एकदा भगवान् बुद्धस्त ब्रह्मचारिणमद्राक्षीत् अभिललाष च तं शिक्षयितुमीदृक्षा कला या खलु तेनाऽभ्यस्तचरीभ्य सकलाभ्योऽपि कलाभ्यो महीयसी स्यात् । अतश्च स्थविरश्रमणरूपमास्थाय स करधृतभिक्षापात्र त युवानमुपतस्थौ ।

"को भवान् ?" ब्रह्मचारी पप्रच्छ।

"स्वशरीर वशीकर्तुमीशोऽहमस्म्येको मनुष्य ।"

"को न्वभिप्रायोऽस्या भवद्गिर ?"

बुद्ध प्रत्युवाद, "कश्चिद् धानुष्क शरव्ये शर सधातुमवैति, पोतवाह पोत वहति, शिल्पी भवनरचना पर्यवेक्षते, किन्तु ज्ञानवान् स्वात्मानमनुशास्ति।"

"कथमिव ?"

"कोऽपि त प्रशसति चेत् तस्य चित्त न विचलति, कश्चिदमु निन्दति चेत् तस्य स्वान्त शान्तमेवावतिष्ठते; सत्यधर्माचरणे स भृशमनुरज्यते, तत एव च परमशान्तौ निवसति" इति।

सत्सङ्कल्पशीला वत्सा ! यूयमपि स्वेषामीशितुमभ्यस्यत। स्वस्वभावस्य प्रभवो भवितुमुदग्रसययममपि समपेक्षध्व चेत् मा स्म जातु विषीदत।

दारुविनिर्मितो भद्राश्वो यादृशो विरच्यते स सर्वदा तादृगेवाऽऽस्ते, केवल केलये एव च वल्गासनाथीक्रियते। तदपेक्षया तु स दुर्ललितस्तरुणतुरगमो ध्रुव गरीयान् य शनै शनै साधुवाही सपद्यते।



२

# सत्साहसम्

निपतिता यूयमपाम्पतौ। विशालवारिराशिरसौ युष्मान् न भीषयते। यूयमितस्तत पाणिपादमुत्क्षिपथ, तरणशिक्षक गुरु प्रति कृतज्ञता चानुभवथ। तरङ्गभङ्गानभिभवन्तो यूयमात्मान त्रायध्वे। आविष्कृतमेव शौर्य युष्माभि ।

प्रसुप्ता खलु यूयम्। 'अग्निरग्नि'रिति भयघोषणा युष्मान् अबूबुधत्। तत्क्षणमास्तरणादुत्पतिता यूय विलोकयथ स्वपुरतो वह्नेर्लोहिताभ ज्वालावलीवलयम्। तत् प्राणहर भयमप्यगणयन्तो धूमस्य स्फुलिङ्गाना ज्वालाजालस्य च मध्यात् प्रधाव्य स्वात्मान रक्षथ। इदमपि सत्साहसम्।

बहुदिवसपूर्वमहम् इङ्गलैण्डदेशे बालाना पाठशालामेका वीक्षितुमयासिषम्। तत्र आ वर्षत्रयवयस्कशिशुभ्य आसप्तशरदायुष्का बाला बालिकाश्च सीवनाऽऽलेखनकथाश्रवणगानेषु न्ययुज्यन्त।

तेषामध्यापको मामभ्यधात्—"साम्प्रत वयमनलाद् रक्षाया. अभ्यास कुर्म। न खलु पावकपरीतमेतत् स्थलम्, पर शिक्षिता अस्माभिरमी दारका भयसङ्केतसमकालमेव झटिति निर्गन्तुम्।"

स 'सीटी'शब्दमकरोत्। तत्क्षणादेव बाला स्वीयानि पुस्तकानि लेखनी सूचीश्च विहायोदतिष्ठन्। कृते च द्वितीये सङ्केते सकला अपि ते एकैकमनुसरन्तो बहिरगच्छन्। कतिपयैरेव पलै

अशेषाऽपि कक्षा रिक्ताऽभूत्। अमी शिशवो हुताशनभय प्रति-कर्त्तुं साहसिक कर्म कर्तुञ्चाशिक्ष्यन्त।

कस्य रक्षायै यूयमतरत? स्वरक्षायै।

कमभिरक्षितु यूय ज्वलनज्वालामध्यादधावत? आत्मान रक्षितुम्।

कस्य त्राणाय बाला अनलभय प्रत्यकार्षु? आत्मनस्त्राणाय।

उदाहरणेष्वेषु प्रत्येक साहसस्याविष्करण स्वात्मरक्षार्थमक्रियत। अप्यासीदेतदयुक्तम्? मा मैवम्। स्थाने खलु स्वजीवनस्य रक्षणं तत्कृते शौर्यप्रदर्शनञ्च। तथापि अस्त्यपराऽस्मादपि वरीयसी वीरता या किलाऽन्येषा रक्षायै प्रकाश्यते।

*

अह युष्मान् माधवस्य कथा भवभूतिलिखिता श्रावयामि।

मन्दिराद् बहिर्जानुभ्या भूमिगतो माधव कस्यापि करुणक्रन्दन-माकर्णयति। अन्विष्य प्रवेशपथ जालमार्गप्रविष्टचामुण्डादेवीमण्डप-मध्यभाग कि वीक्षते?

तस्यै करालायै पूजाबलीभवितु कन्यैका तत्र प्रस्तुताऽऽस्ते। सा च खलु वराकी मालती, या निद्राभिभूतैव प्रसह्य तत्रानीता। सा बाला बलिकर्त्रोर्दम्पत्यो समीपमेकाकिन्यास्ते। "हे माधव, मम हृदयेश्वर, अपि नामोपरताऽपि स्या तव स्मृतौ सदैव सन्निहिता। मृतोऽपि नन्वमृत एव स यस्य वल्लभश्चिराय तस्य स्मरति सस्नेहम्" इत्येव स्वदयित माधव ध्यायन्त्यामेव तस्या याजकश्छुरिकामुद्गुरते। वीरो माधव सक्ष्वेलमुत्प्लुत्य बलिवेश्म प्रविशति। स याजकेन सह तुमुल युद्धचते रक्षति च मालतीम्।

कस्य कृते माधव पराक्रममिम प्रकटयाञ्चकार? किमसौ

स्वार्थकृतेऽयुध्यत ? आम्, तथापि न केवल स्वार्थसिद्ध्यर्थम् अपि तु अपरप्राणपरित्राणायाऽपि स पौरुषप्रदर्शने प्रधने च प्रावर्तत। आतुरस्य कस्यापि कातरस्वर श्रुतिरन्ध्र प्रविश्य तस्य वीरहृदय पस्पर्श।

*

निमिषमात्र विमृशथ चेद्बूय तदीदृशो बहव स्वदृष्टा प्रसङ्गा· व स्मृतिपथमुपस्थास्यन्ति। दृष्टमेव स्याद्युष्माभिरवश्य यत्कथ कोऽपि जन प्राप्तभयसङ्केत कस्याप्यपरस्य पुरुषस्य योषाया शिशोर्वा साहाय्यार्थं सत्वर तमुपयातीति।

समाचारपत्रेष्वितिहासपुस्तकेषु वैतादृशसाहसकृत्यकथा युष्माभिः अधीता एव स्युरिति नात्र सन्देह । श्रुतपूर्वं स्याद्युष्माक यत्कथ वह्निनिर्वापका दहनदीप्तेभ्यो गृहेभ्यो जनास्त्रायन्ते, केन प्रकारेण च खनका अगाधेष्वन्धकूपेष्ववतीर्य तोयविप्लवेन पावकेन श्वास-रोधकवाष्पेण वा मुमूर्षून् स्वसहकारिणो रक्षितु तास्तत उद्धरन्ति, कथ वा भूकम्पकम्पमाननिकेतनेभ्य पुरुषा सत्यपि भित्तिपातभये निर्भयमसहायजनान् बहिरानयन्ति ये खल्वन्यथा शकलराशेरध-स्तान्निष्पीडिता निधनमवाप्नुयु, कया रीत्या च नागरिका· स्वनगर स्वमातृभूमि वाऽभिरक्षितु शत्रून् प्रत्यवतिष्ठन्ते, क्षुत्तृषे तितिक्षन्ते, क्षत मरणञ्च विषहन्ते।

एव वय द्विविध शौर्यमलक्षयाम ययोरन्यतर स्वस्याऽपरञ्च परेषा साहाय्यार्थं प्रयुज्यते।

*

वीरविभीषणस्य वृत्तान्त व श्रावयामि यो मरणभयमप्यतिशयानं सकट स्वेच्छयालिलिङ्ग। स पृथिवीश्वरस्यैकस्याऽमर्ष धर्षयस्तस्मै

सत्परामर्शमीदृश विश्राणितवान् यदर्थं न कोऽप्यन्य साहसमकार्षीत्।

लङ्कायां दैत्यराड् 'दशास्यो रावण' इत्याख्ययाऽऽख्यायत क्षितितले। स सीतादेवीं बलादपहृत्य स्वस्यन्दनमधिरोप्य च लङ्काद्वीपावस्थित स्वप्रासाद समनयत्। नितरा रोचिष्णु हि तद् हर्म्यमेकान्तरमणीयश्च स आरामो यत्र सा राजकुमारी निरुद्धा। तथापि सा नितरा दूयमानमानसा नक्तन्दिव विललाप। स्वस्वामिन राम पुनरपि कदाचित्सा प्रेक्षितु क्षस्यते न वेत्यपि च न विवेद।

यशोधनो राम क्व मे कान्ता सीता बन्दीकृतेति वानरेन्द्राद्धनुमतोऽवबुध्य स्वकीयेन सुशीलसहोदरेण सौमित्रिणा बृहत्या वीरसेनया च समेनो बन्दिन्यास्तस्या साहाय्यार्थं प्रतस्थे।

राक्षसेश्वरो रावणो रामाऽऽगमनवार्तामाकर्ण्य भयात् प्रचकम्पे।

ततस्तस्यामात्यास्त द्विधा प्राबोधयन्। तस्य राजसभासदा वृन्दमेक तत्सिहासनमभित सभूय तमभ्यभाषत—"सर्वं समञ्जसम्, महाराज! नात्र भयकारण किमपि। सुरानसुराश्चोभयानपि भवानभिभूतवान्, तदा रामस्य तत्सहायाना हनुमत्प्रभृतीना कपीनाञ्चाभिभवे भवत क खलु प्रयास ?"

तेषु वाचालसचिवेषु शासितु सकाशात् परायातेष्वेव तस्य भ्राता विभीषणस्तत्र प्राविशत्। स तस्य पुरतो जानुभ्यामवनौ निपत्य तत्पादौ जग्राह[१]। ततश्चोत्थाय स भद्रासनस्य दक्षिणतो निषसाद जगाद च—

---

[१]तच्चरणावचुम्बत् इति मूलस्था पाश्चात्य-वाक्पद्धतिर्वा समादर्तव्या। —अनु०

"भो भ्रात ! यदि भवान् ससुख वस्तुमभिलषति, अस्य लङ्काख्यरम्यद्वीपस्य नृपासनमात्मसात् रक्षितु च काङक्षति तर्हि प्रत्यर्प्यता सुन्दरी सीता यतो हि साऽपरस्य भार्या। राममुपसृत्य क्षमा प्रार्थ्यताम्। ननु न स भवत्प्रार्थना विफलीकरिष्यति। मा स्म भूद् भवान् दुर्विनीतो दृप्तश्च।"

माल्यवान् नाम्न कश्चिदन्यो विपश्चिदुपदेशमिम निशम्य नितरा तुष्ट "विमृशतु तावच् श्रीमान् निजानुजस्य वचनम्, युक्तमुक्त हि तेन" इति सोल्लासमुदीरयामास दानवेन्द्रम्।

"दुराशयौ युवामुभावपि मम परिपन्थिपक्ष्यौ" इति राजा व्याजहार।

तस्य दशाना शीर्षाणामीक्षणेभ्यस्तथा क्रोधाग्निकणा विकीर्णा· यथा खलु माल्यवास्तु कान्दिशीको निलयात् पलायत। आत्मबलविभूषितो विभीषणस्तु ततो न विचचाल समुवाच च—"प्रभो! भवति हि प्रत्येक मानवस्य हृदये सुमतिकुमत्योर्निवास। तत्र सुखावह हि जीवित सुमतीना दु खावह तु कुमतीनाम्। भ्रात, दुर्मन्त्रिषु तिष्ठमानो भवान् ननु कुमतिवशवद। न हि ते सुसचिवा सन्मित्राणि वा भवताम्।"

एतदुक्त्वा स तूष्णीमास्थित पुनरपि नृपस्य पादयो र्निपपात।

रावणस्तु "दुरात्मन्! त्वमपि मदरातीनामन्यतम। अलमलमीदृशमनर्गलमालप्य, गच्छ, निशामय च शब्दानिमास्तान् साधुसन्यासिनो ये किल कान्तारमध्यमध्यासते, न पुनस्त नर यो हि समरे स्वकीयान् सर्वान् वैरिणो व्यजेष्ट" इत्येव तारस्वरेण गर्जन् भ्रातर विभीषण पादेन प्राहरत्।

विषण्णान्त करणो विभीषणस्तत उत्थाय राजगृहमुत्सृज्य च निरगच्छत्।

अकुतोभयोऽसो रावण मकलमपि निष्कपटमभणत्। पर यदा असौ दशशिरास्तस्यानुशासन सश्रोतु नैषीत् गृहत्यागादृते तस्य नान्या गतिरासीत्।

भ्रातु पादप्रहाराद् विभीषणो यन्नाभैषीत् तन्न केवल तस्य शारीरपौरुषम् अपि तु मनोबलमपि सव्यनक्ति। कुत ? यतो हि यानि वचास्यन्य आस्थानचरा सत्यपि तावति देहबले नोदचारयन् तान्यपि नृपाग्रे वदन् म नोद्विविजे। एतद्धि नैतिकबलाह्वय मानस साहसम्।

*

'मूसा'सज्ञके 'इजराइल'देशस्य नायकेऽप्येतादृश सुसाहस बभूव। व्यथितान् यहूदिजातीयाञ्जनान् बन्धान्निर्मोक्तुमसौ 'फाराओ'नामक मिश्रदेशस्य शासकमभ्यर्थयन् न बिभाय।

ईदृक्साहसम् ईशदूते मुहम्मदेऽप्यविद्यत येनाऽरबवासिना समक्ष स्वकीया धार्मिकविचारा आविरक्रियन्त। मृत्युभय प्रदर्शयतामपि तेषा न स तथ्यकथनाद् विरराम।

भगवति सिद्धार्थे[1]ऽप्येवविध सत्त्वमासीत्। स हि भारत-भूमिवास्तव्यान् अश्रुतपूर्वं प्रशस्त पन्थानमदर्शत्, बोधितरोरधस्ताच्च आक्रान्तोऽप्यसुरै सत्रस्तो नाभूत्।

'स्निह्यता परस्परम्' इत्युपदेशपरे यीशूप्रभावपि तथाभूत सत्त्व व्यभासत। तादृशोपदेशप्रतिषेधकेभ्यो यरुशलमदेशीयधर्माचार्येभ्य शूलारोपकेभ्यो रूमवासिभ्यो वा स नात्रासीत्।

---

[1]यो हि बुद्ध इति बुध्यते बुधै, बुद्धोऽर्थादुपलब्धबोधिरधिगत-पूर्णप्रज्ञो वा।

एव वय साहसस्य तिस्रो विधा मात्रा वाऽवर्णयाम—

दैहिक साहस यत्खलु स्वरक्षायै प्रयुज्यते।

तत्साहस यद्विपन्नाय बन्धुजनाय मित्राय प्रतिवेशिने वा सङ्कटापन्नमातृभूमये वा प्रकटीक्रियते।

अन्ते च तन्नैतिक साहस यदस्मान् बलिष्ठानामप्यन्यायनिष्ठाना मानुषाणा प्रतिरोध शिक्षयत् सत्यानि न्याय्यानि च वचासि तेषा कर्णाभ्यर्णचरीकरोति।

*

अथ कदाचित्केचिदाक्रान्तार 'अलमोडा'ऽधिपते पर्वतीयप्रदेशमभ्यषेणयन्। तान् प्रतिहन्तु स केषाञ्चिन्नराणामभिनवा सेना सन्नाहयामास। तस्या प्रत्येक सैनिक च निशितासिना सुसज्जित विधाय तान् अभिगन्तुमादिदेश।

तत्क्षणादेव सर्वेऽपि साटोप स्वकोषेभ्य करवालान् निष्कृष्य समुल्लास्य च तास्तारस्वरेण हुञ्चक्रु।

"किमर्थं सर्वमिदम्" इति राजा तानपृच्छत्।

"स्वामिन्, सोत्साह सज्जीभवामो वय येनाऽस्माक सपत्ना अस्मानसावधानान् अवलोक्य नाभिधावेयु" इति प्रत्यूचुस्ते।

"विह्वला विक्षुब्धाश्च माणवका !" भूपतिस्तान् प्रत्यालपत्, "न मे कोऽप्यर्थो युष्माभि। व्रजत, स्ववसती प्रतिव्रजत।"

अदर्शि युष्माभिर्यत् तादृशमुत्क्रोश खड्गाना खणत्कारञ्च क्षोणीपतिर्न तृणायाप्यमन्यत। अवगतमेवासीत्तस्य यद्यथार्थनाम्नि शौर्ये निर्घोषो रिष्टीना रणत्कारश्च नावश्यकौ।

*

एतद्विपरीतम्, निम्नाङ्कितकथाया यूयमवलोकयिष्यथ यन्नराः कियत्या शान्त्या कार्यं निरवर्तयन् कथङ्कारञ्च मध्येसमुद्र समुपस्थिते अपि जीवितसशये सधैर्यं तत्सम्मुख समस्थिषत।

दशोत्तरैकोनविशतिशततमस्य ख्रीस्ताब्दस्य मार्चमासान्तस्य अयमुदन्त। स्काटलैण्डदेशस्य कोऽपि पोत पान्थानास्ट्रेलियाराष्ट्राद्युत्तमाशाऽन्तरीप नयन्नास्ते। न खलु नामापि नभसि जलदलेशस्य। नीलो निस्तरङ्गश्च नीरधि।

अकस्मादेवाऽऽस्ट्रेलिया-पश्चिमतीरात्क्रोशत्रये वहित्र शैलखण्डेन एकेन सह समघट्टत। झटित्येव यानस्य सर्वेऽपि कर्मचारिणः प्रयत्नपरा अलक्ष्यन्त। प्रत्येकमपि तेषा स्वे स्वे कर्मण्यभिनिविष्ट। शीश्-शीश्शब्दा श्रोत्र प्राविशन्। किन्तु न हि कोलाहलोऽसौ दुर्व्यवस्थात सत्रासाद् वा समजायत।

"नावोऽधिरोहत" इति घोषणासमकालमेव यात्रिणो रक्षावेष्टनैरात्मान पर्यवेष्टयन्त।

कश्चिन्नेत्रहीनो जनो निजानुजीविना नीयमान पोततलमुपासर्पत्। सर्वेऽपि ततोऽपसृत्य तस्मै पन्थान प्रायच्छन्। तस्य ह्यसमर्थतया सर्वोऽपि प्रथम तत्साहाय्य सविधातुमैहत।

कतिपयैरेव पलै पोतोऽसौ सर्वै पर्यहीयत, झटित्येव जले न्यमज्जच्च।

अन्यतमतरणौ आसीनया कयाऽप्यङ्गनया गातुमारब्धम्। कल्लोलकलकलैरन्तराऽन्तराऽन्तरितमपि तद्गीतस्य ध्रुवपद नाविकाना बाहुबलमववर्धत—

"वाहयत नाविका, अभितट वाहयत!"

पर्यवसाने च ते पोतव्यसनपतिता अशेषा अपि पुरुषा उपतीरं

प्राप्ता बहिश्चानीयन्त दयार्द्रैर्धीवरै ।

नैकोऽपि पथिक प्रेतपथातिथित्व प्रापत्। तथा च पञ्चाशदुत्तर पुरुषाणा चतु शत स्वकीयशान्तप्रकृत्या स्वात्मान ररक्ष। धन्या तेषा धृति ।

★

साम्प्रतमह तत्सौम्यसाहस गभीरा धृति वा पुनर्वर्णयामि यया विनैव तूर्यनाद विनैवाऽऽटोपाडम्बर वा प्रभूतानि भद्राण्युपकारीणि च कार्याणि क्रियन्ते ।

पञ्चशतनिशान्तशालिन कमपि भारतवर्षीयग्राम निकषा काऽप्यगाधसलिला सरित् प्रावहत्। तद्ग्रामवासिनो जना भगवतो बुद्धस्योपदेशान् तावत्पर्यन्त न न्यशाम्यन्। तस्माद् बुद्धस्तानुपसत्तु सत्पथमनुशासितुञ्च मतिं चकार।

स कस्यापि आसरित्तीरविस्तृतशाखस्य विशालतरोस्तले निषसाद तत्सवसथनिवासिनश्च स्रोतस्विन्या परस्मिस्तीरे समवेता। तदात्वे बुद्धो निजगिरमुदीर्य पवित्रताया परस्परप्रीतेश्च सन्देश तान् समश्रावयत्। दिव्यशक्त्या प्रवाहस्योपरि पर्युह्यमाना इव तस्य उपदेशा आपगापारमुपगता। तथापि ते तद्वचनेष्वास्थामबध्नन्त· तद्विरुद्धम् असन्तोषमाविश्चक्रु ।

तेष्वेक एव प्राज्यजिज्ञासाकुलो बुद्धस्य सकाशमजिगमिषत्।

न तत्र सेतुरासीन्नाऽपि नौका। एवमनुश्रूयते किल यन्महासाहससपन्नमानसोऽसौ अगाधपयस्विन्या उपर्युपरि सलिल पद्भ्यामेव प्रसर्पंस्त गुरुमुपासीदत् नमस्कृत्य च त सहर्षातिशय तदुपदेशान् अश्रौषीत्।

अप्यय पुरुष कथानुसार तरङ्गिणीमलङ्घयत् ? नैतद् विद्मो वयम्। परमुत्कर्षसाधकमध्वानमनुसर्त्तुं स साहसमकार्षीत्। ततश्च तेन दृष्टान्तेनाकृष्टा अवशिष्टा अपि ग्रामीणा बुद्धस्य धर्मघोषणा शृण्वन्तस्तत्पावनोपदेशपरिपूतचेतस समजायन्त।

*

अस्त्येक साहस यन्ननु नरेण नदीस्तारयति। अस्ति चान्यदपि यत् त सत्पथ प्रदर्शयति। पर सुपथ सन्ततानुसरण हि तस्मिन् पदार्पणादपि महीयस्साहससव्यपेक्षम्।

कुक्कुटी-तदर्भकाणामुदाहरणमाकर्णयध्वम्।

गौतमबुद्ध स्वशिष्यानन्वशात् "प्रयत्नाना फल लप्स्यत एवेति विश्वस्य यथाशक्ति प्रयत्यताम्। यथा कुक्कुटचण्डानि प्रसूय पोतकास्तेभ्यो निर्गमयितु तदुपरि निषण्णा न भवति चिन्तातुरा यन्मम शावकाश्चञ्चुभि कोशान्निर्भिद्य प्रत्यूषप्रकाश प्रेक्षिष्यन्ते न वेति, तथैव युष्माभिरपि भयार्तैर्न भाव्यम्। युष्मन्मन सदा सन्मार्गमभिनिविशेत चेद्यूयमपि पर प्रकाश प्राप्स्यथ।"

सद्वर्त्मानुवर्तन, विपद्वेदनाऽवतमसै सह सघर्ष, सत्स्वपि प्रत्यूहेषु प्रत्यह पुरत प्रयाण प्रकाशाभिमुखमभिवर्धितु च भृशमभियोगमेव वास्तव साहसमाहु।

पुरा किल ब्रह्मदत्तनामनि नरपतौ वाराणसीपुरीं परिपालयति देशान्तरशासक कोऽपि तस्य शत्रुस्त प्रतियोद्धु स्वहस्तिन युद्धविद्यामशिक्षयत्।

आहतेषु रणतूर्येषु स विराड् दन्तावल· स्वस्वामिन शत्रुदुर्गवप्रं प्रापयत्। अवरुद्धदुर्गसैनिका सालस्य शिखरादाग्नेयास्त्राणि

प्राक्षिपन् गोफणाभि पाषाणाश्चावर्षन्। ततो भीषणशिलाभुशुण्डी-वर्षात् परापतति तस्मिन् द्विपेन्द्रे तस्य रणकर्मशिक्षकस्तमभिद्रुत्य "रे वारणेन्द्र, वीरस्त्वम्! वीरवद् व्यवहर कपाटमुत्पाटच पातये-श्च!" इति प्राबोधयत्।

वचोभिरेभि प्रचोदितोऽसौ विशालकायो द्विरदराजो द्वार तरसा सप्रहृत्य पुरस्यान्त प्रविशन् राजान विजयिन व्यदधात्।

तदेव, साहस विघ्नबाधा विधूय विजयवर्त्म विवृणोति।

*

पश्यत केन प्रकारेण प्रोत्साहकपदै पुरुषाणा तिरश्चा च समान उपकार कर्तुं पार्यत इति।

मुहम्मदीयाना कस्मिश्चित् प्रशस्तपुस्तके परिकीर्तिता आबू-सैयदाभिधस्य वीरहृदयस्य कवे कथा किल अस्य सत्यस्य विशद निदर्शनम्।

अथ कदाचिदाबू-सैयदो ज्वरातुरोऽजायत। तदवेत्य तद्वयस्या निरामयमनुयोक्तु तन्निलयमुपायन्। कवे कुमारस्तानाद्वार प्रत्युदयात्। तस्मिन् दिने किञ्चित्कल्यतया कवेस्तत्सुतस्य दन्त-वाससी स्मितेन समलसताम्। अभ्यागतास्ते कवेर्वेश्म प्रविश्य तत्रो-पाविशन्। परिहासप्रिय त यथापुर नर्मालापान् प्रकुर्वन्त प्रेक्ष्य ते सर्वेऽपि विस्मितविस्मिता इव सवृत्ता। ततश्च तपनेऽतितरा तपति स निद्राभिभूतोऽभवत्, अपरेऽपि च सर्वे स्वापपरा आसन्।

सायसमये सर्वोऽपि सप्रबुद्ध। आबू-सैयदो गृहागतान् लघ्वाहारम् आहारयत् स्वावास सुवासयितुञ्च सर्जरसवर्तिका समज्वलयत्।

ततोऽसौ कञ्चित्काल परमात्मानमुपास्य स्वाऽऽस्तरणादुत्थित

स्वकलिता लघुकवितामेकामुदीरयितुमारेभे---

न भव निराश पुरुष, विषादे
तमपहरिष्यति हर्षनिमेष ।
प्रवहतु दहनमयो मरुवात
भविताऽसौ मृदुमरुदवशेष ॥१॥

ख वृणोतु काम घनमाला
कच्चिदेतु विलय च कराला ।
तव सामग्रीजातमदग्ध्वा
शाम्यतु कच्चिद् वह्निज्वाला ॥२॥

आयाताऽप्यपयाति विपत्ति-
स्तेन तदापि विमुञ्च न धैर्यम् ।
इच्छसि श यदि भज जगदीश
काल कुरुते परमाश्चर्यम् ॥३॥

आशामयीमेता कमनीयकविता निशम्य समेऽपि ते प्रसाद-मुत्साहञ्चानुभवन्त स्वस्वनिकेतनानि प्रतिन्यवर्तन्त । एवञ्च सामयोऽप्यसौ स्वकीयसुस्थसुहृदा साहाय्य समाचरत् ।

स्वय सत्साहससमन्वित सन्नेव पुमानपरान् समुत्साहयितु समर्थ, यथा दीप्त एव दीपोऽपर दीप प्रवर्तयितु पारयति ।

एतदाख्यानपाठका वीरा बाला बालिकाश्च, शिक्षेध्व प्रोत्सा-हयितुमपरान् स्वात्मान च ।



३

# प्रफुल्लता

कस्यापि वर्षाभूयिष्ठस्य देशस्य एकस्मिन् महानगरेऽहमेकदा-ऽपराह्णे बालकाधिष्ठितान् सप्ताष्टान् शकटानपश्यम्। प्रत्युषस्येव क्षेत्रेषु खेलितु ग्रामान् नीतास्ते दारका दुर्दिनबाधिता वर्षति पर्जन्ये समयात्प्रागेव निवर्तमाना अवर्तन्त।

तथाप्यमी विहसन्तो गायन्तो मध्येमार्गमध्वगान् सामोदमभि-वादयन्तश्च समदृश्यन्त, सत्यामपि च विषादवेलाया नैव समपास्यन् स्वान्त प्रसादम्। भवति च म्लानमनसि कस्मिश्चित्सहचरे तमपरे सङ्गीतै प्रासीसदन्। किम्बहुना, गमनपरा पथिका अपि तेषां हास श्रुत्वा "न तावदम्बर मेदुर मुदिरै"रित्यतर्कयन्निव मुहूर्तम्।

★

आसीत् खलु पुरा खुरासानजनपदस्य राजकुमार कश्चिच-मीरो नाम। राजानुरूप हि जीवन तदीयम्। समरार्थं प्रस्थितस्य तस्य समवहद् ऋजीषाऽम्बरीष-पिठरादिरसवतीसभारान् क्रमेलकानां त्रिशती।

अथ कदाचिदसौ दैवदुर्विपाकात् खलीफा-इस्माइलेन बन्दिग्राह-मग्राहि। पर न हि दुरदृष्ट विनाशयत्यशनायामपीति बुभुक्षा-कुल सन् समन्तिकस्थ स्वपौरोगव सत्प्रकृति किमपि पक्तुमवोचत्।

वराकस्य तस्य सूपकारस्य पार्श्वे तु केवल पिशितशकलमेक-

मेव समवाशिष्यत। तदेव स उखायामुत्क्वथितु पावकोपरि निधाय सुरसतर कर्तुकाम शाकमन्वेषितु निष्क्रान्त ।

अत्रान्तरे कोऽपि कुक्कुर तत्पाकपात्रमनुनिष्क्रामन् मास-सुवासमासाद्य स्वमास्य स्थाल्या चिक्षेप। ततश्च वाष्पोष्णता-प्लुष्टोऽसौ तथा ससभ्रम सरभस च ततोऽपसृतो यथा सा स्थाली तस्य शिरस्येव समश्लिषत्। तेन च सत्रस्तोऽसौ ता निरसितुम-समर्थ. सहैव तया तत पलायत।

दृश्यमिद सदृश्य अमीरोऽतितरामट्टहासमकार्षीत्।

तस्याट्टहासमाकर्ण्य तदवेक्षाऽध्यक्ष सत्यपि विषादहेतौ किमिति विहस्यत इति त पप्रच्छ।

अमीरस्तु शिविराद् द्रुतमपसरन्त सारमेय सदर्शयस्त प्रत्युदैर-यत्—"अद्य प्रभाते मन्महानस-सामग्रीसवहनाय महाङ्गाना त्रिशत-मावश्यकमासीत्, सम्प्रति चालमयमेक एव श्वा इति विमृशन् विहसामि।"

स हि परिहासप्रियो बभूव। परप्रसादनाऽप्रवणस्यापि च तस्य विनोदस्वभावोऽवश्यप्रशसनीय एवास्माभि । अथासौ यदि तादृशदारुणदुर्दशायामपि शशाक रक्षितु चेत प्रसाद तत्किमसमर्था वय स्यातु सस्मितास्तनीयसीषु चिन्ताततिषु ?

पुरा किल पारसीकेषु काचिन्महिला मधुविक्रयव्यापार चकार। अतिमिष्टव्यवहारतया तस्या पण्यगृह ग्राहकैराकीर्णमिवालोक्यत सर्वकालम्। किं बहुना, यदि सा विषमपि व्यक्रेष्यत सकलोऽपि लोकस्तन्मधु मन्यमान समक्रेष्यदिति कीर्त्यते किल तत्कथालेखकेन कविना।

अथैकदा कोऽपि पामर स्त्रियममू तद्व्यापाराद् भूरिलाभ लभ-

माना निभाल्य स्वयमपि तमेव व्यवसायमङ्गीकर्तुं कृतनिश्चय पण्यशाला प्रत्यतिष्ठिपत्। प्रतिष्ठापितापणस्य मधुभाजनराजीमनु समासीनस्य च तस्य परुषाकृति भ्रूभङ्गञ्च निरीक्ष्य सर्वोऽपि क्रयिकस्तस्य वस्तु विसृजन् पुरस्तात् प्रससर्प। न मक्षिकापि काचिदुत्सेहे तत्सारघ समया समायातुमिति वर्णयति तत्कवि। समागतेऽप्यस्तमनसमये स सदा रिक्तहस्त एव समालोक्यत। एकदा काऽपि नारी त निरूप्य स्वभर्तारमभणत्—'कटूकरोति क्षौद्र द्राक्षामयमपि कटुकटाक्ष'।

अपि सा मधुव्यवसायिनी वनिता केवल ग्राहकान् विमोहयितुमेव सिष्मिये? मा मैवम्, ननु प्रकृत्यैव सा स्मितमुखीति मतिर्मे। न च वय केवल क्रयविक्रयकृते जीवामोऽत्र जगत्यामपि त्वस्माभि परस्परस्य सहचरैरिवापि वर्तितव्य खलु। योषिन्मतल्लिकायास्तस्या क्रेतार ता न केवला पण्याजीवामपि तु प्रसन्नवदना भुवनैकपुरवासिनीमपि सममसत।

★

अनुपदमेव मया निरूपयिष्यमाणदृष्टान्तात् महापुरुषात् प्रफुल्लताप्रवाह प्रसन्नप्रस्रवणमिव समसुस्रुवत्। तस्य हि लाभलिप्सया वा ग्राहकैर्वा किमपि कार्यं नाभूत्। स खलु महामहनीयमहिमा विश्वविश्रुतश्च राम।

दशशिरस विंशतिबाहु पिशिताशपति न्यशातयत्स। उपन्यस्तपूर्वैव प्रस्तावनाऽस्या कथाया। अभूत् किल रोमहर्षण तद्रणम्। तत्र हि शाखामृगा ऋक्षाश्च सहस्रश स्वजीवितानि विससृजू रामस्य सेवार्थम्, समास्तीर्यंत च क्षितितल रामशत्रूणा रक्षसामपि शव-

राशिभि । राक्षसराजो रावणोऽपि परासुरासीत् । नितरा दु साध्यमभूत् तद्व्यापादनम् ! तस्य हि दशशिरासि विशतिञ्च भुजान् एकैकशश्छिन्दति श्रीरामचन्द्रे नचिरादेव तानि पुन. पुन प्ररुरुहु. पुन पुनश्च चिच्छिदिरे श्रीरामेण। परतस्तु नभस. शिरसा दोष्णां च वृष्टिरिव प्रारेभे।

अवसिते ननु तस्मिन् भयावहे महाहवे तत्र निहता कपि-भल्लूका पुनरुज्जीविता सन्त तदादेशसपादनसज्जा महावाहिनीव अतिष्ठन्। ततश्चोपार्जितजयोऽपि शान्ताकृतिर्भद्रव्यवहारो यश-स्वान् रामो विश्वासास्पदेषु सहायेषु तेषु कृपापूर्णं दृक्पातमकरोत्।

दानवेन्द्रभद्रासनस्योत्तराधिकारी विभीषणस्तु रणाङ्गणप्रकटित-तादृक्पराक्रमान् वीरान् पुरस्कर्तुं मणिमाणिक्यमहार्घवसनभूषणाना शकटभारानानाययामास।

तन्निरूप्य राम समुदैरयत्—शृणु मित्र विभीषण! उच्चैस्तर-मारुह्याऽन्तरिक्ष प्रकीर्यता प्रीतिदानमेतत् पृतनाया पुरस्तात्।

विभीषणोऽपि तथेत्युक्त्वा विमानमात्मनो वियत्युन्नीय तत एव स्फुरत्प्रभाणि रत्नाभरणानि शोभनवर्णानि वस्त्राणि च नीचै-र्निचिक्षेप।

अथ च वर्षत्कोषोपर्यहमहमिकया निपतत्सु परस्परमुत्सार-यत्स्वच्छभल्लवलीवदनेषु भुजाभुजीव प्रवृत्त किमपि कौतुका-वहम्।

तन्निभाल्य रामभद्रस्तद्भार्या सीता च सोत्प्रास हसितुम् आरभेताम्। तस्य भ्राता सौमित्रिरपि नाशकदुपरोद्धु प्रहासम्। यत्सत्य महासत्त्वा हि हसितुमुत्सहन्ते तद्वत्। न चेह किमपि हृद्यतरं निरवद्य-हार्दिकोल्लासात्। 'साहस'समानार्थक 'courage' शब्दो

'हृद्य' इत्यर्थपर 'cordial' शब्दश्चैकस्मादेव धातोर्निष्पन्नौ[1]। साहस खल्विद यद्विषमदशास्वपि सर्वात्मना सोल्लासमवस्थान नाम।

ननु न सन्तत हसितव्यमेवेति वच्म। तथापि न तावत् प्रफुल्लता धीरता सौम्यता च क्वचिदप्यस्थाने। अहो हितसाधकत्व तासाम्! तासामेवैष प्रभावो यन्माता स्वसदनमानन्दमय तनोति तनयेभ्य, परिचारिका पररुजोऽपवर्जने विजयमाप्नोति नचिरायैव, स्वामी सेवकाना कार्यं सरलीकरोति, कर्मकर स्वसहकारिणामुत्साह समेधयति, अध्वगो दुर्गसञ्चरे सहचरान् मार्गमादिशति देशभक्तश्च स्वदेशवासिनामन्तरेष्वाशा परिपुष्णाति।

समुल्लसितमनसो बाला! यूयमपि प्रफुल्लताया प्रभावेण कि कि न साधयितु समर्था?



---

[1]आङ्गलभाषाया हृदयवाचि heart, cord (cordial=hearty) इति शब्दद्वयमपि सस्कृतभाषाया 'हृदय'शब्दस्यैव रूपान्तरमात्रम्।

—अनु०

४

# स्वावलम्बनम्

आसीत् पुराकालिकेषु वनायुनिवासिषु हातिमताईनामधेय कोऽपि दानशौण्डो वदान्यवर स्वसमृद्धोपहारदानाना भूम्ना सुविश्रुत ।

एकदा तत्सुहृदस्तममृच्छन्, "अपि जातुचिद् वो लोचनगोचरोऽभवद् भवतोऽपि भव्यतरो नर कश्चित्" इति।

"ओम्" इति स प्रत्युवाच।

"को नु खल्वसौ ?"

"कदाचित् प्रीतिभोजमायोजयितुकामोऽह चत्वारिशतमुष्ट्रान् विशस्य 'य कोऽपि पुरुषो मदावसथमुपस्थाय यथाकाममभ्यवहर्तुमर्हती'त्यजूघुषम्। तदर्थञ्च दूरस्थानतिथीन् निमन्त्रयितु सामन्तैरनेकै सम सप्रस्थितोऽहमध्वमध्ये कमपि काष्ठच्छिदमलक्षयम्। स हि दारुवृत्तिरेकस्मात्कण्टकिन स्तम्बात् तदात्व एव काष्ठभारमच्छिनत्। तञ्च नि स्व निरीक्ष्याऽह 'हातिमताई सभोजनैर्जनास्तर्पयति, त्व तत्र किन्न व्रजसि' इत्यन्वयुञ्जि। स तु 'कि स्वजीविकोपार्जिना हातिमताईमहोदयस्यौदार्येण'? इत्युदतरत्।"

कुतो नु हातिमताईस्त दारुभारिकमात्मनो वरीयास व्याजहार ? यतोऽसौ (काष्ठिक) प्राणयात्रार्थं प्रयत्न परेभ्य प्राभृतप्रदानाद् भद्रतर विभावयाम्बभूव। कुत ? उपहारपरिग्रहीतुर्हि न कोऽप्युत्सर्गः

प्रयासो वा विधेयो भवति। अतश्च प्रदाताऽपरानपि परमुखापेक्षित्वमुपशिक्षयति।

ननु नैसर्गिकमेव सुहृद्भ्यश्च सुहृदामुपहारप्रदानम्, युक्तञ्च बलवता स्वबाहुभ्या दीनदुर्गतोद्धाराय प्रयतनम्। तथापि वर स्वस्थसमर्थाना स्वहस्ताभ्यामध्यवसायो न पुनर्दानमादातु करप्रसार। किन्तु न किलैष दोषाय तेषा ये सत्यानुसन्धानाय निदिध्यासनाय च सर्वात्मना समर्पितनिजजीवना।

भद्रमपि काष्ठिकस्य चरित्र पारसीकराजपुत्रो गुश्तास्प (घुष्टाश्व) स्वचरित्रेणाऽतिशेते।

एवमनुश्रूयते पुरा किल गुश्तास्पो नाम राजकुमारो बभूव। स हि पित्रा यौवराज्येऽनभिषिक्ततया परितप्यमानमानसो जन्मभूमिमुत्सृज्य पश्चिमा दिश प्रतस्थे। असहाय क्षुत्तृषातुरश्च स प्राणधारणाय स्वयमेव प्रयसितव्य मयेति सम्यगवगम्य कमपि जनपद प्राप्तस्तदधिपमुपेत्य "प्रवीणोऽह लिपिकर्मणि, तन्नियोजयतु मा लिपिकृत पदे कृपया" इत्युपनाथितवान्। अधिपस्तु तदानी कमपि लेखकमनपेक्षमाणस्त कतिपयदिवसान् प्रतीक्षितुमादिदेश। गुश्तास्पस्तावत् क्षुत्क्षामत्वात् प्रतीक्षितुमक्षमस्तत प्रस्थाय क्रमेलकवाहकान् काश्चिदुपेत्य जीविकार्थमभ्यर्थयाञ्चकार। ते हि कमप्यपरिचित नर स्वसहायकत्वेन नियोक्तु नाकाङ्क्षन्, पर त निरतिशयदारिद्र्योपहत निरीक्ष्य तस्मै किमपि खादितु दत्तवन्त।

ततश्च किञ्चिदन्तरमतिक्रान्त सोऽयस्कारस्य कस्यापि शिल्पशालामुपस्थाय त वृत्त्यर्थं प्रार्थयामास।

'अस्तु तावत्, त्वमस्य लोहस्याऽऽहनने मत्साहायक कर्तुमर्हसि' इति व्याहृत्य स लोहकारो द्रुघण तत्करयोर्न्यस्तवान्।

विपुलबाहुबलोऽसौ राजकुमारस्त गुरुमुद्गरमुद्गूर्य तथा प्राहरल्लोह यथा प्रथमप्रहारपातमात्रे स्थूणा द्विधा व्यदीर्यत। तेन कोपाकुलो व्योकारस्तत्कालमेव तस्य अर्धचन्द्र ददौ।

दारुणदुर्दैवविवशो गुश्तास्पो भूयोऽपि वृत्तिमन्वेषितु निष्क्रान्त क्वचिदपि स्वस्योपयोगित्व प्रतिपादयितुमवसर नासादयामास। अन्ततश्च शस्यक्षेत्रे कृषिकर्म कुर्वन् कश्चित् कृषीवलस्त तद्दशाद्गून दृष्ट्वा दयाविष्ट तस्याऽशनवसननिवासस्थानादिव्यवस्था व्यदधात्।

अथैकदा 'रूमदेशाधिपतितनयाया परिणययोग्यत्वाद् राजवश्या सर्वेऽपि युवका नरेन्द्रमन्दिरे निमन्त्रिता' इति प्रकाशतां प्राप वार्ता लोके। गुश्तास्पोऽपि ता लिप्सु प्रासाद समुपेत्य परिणयार्थिभिरितरै सह मञ्चमधितष्ठौ। राजसुता च 'किताबन'-सञ्ज्ञा नयनगोचर एव तस्मिन् जातानुरागा व्यञ्जितु निजराग सेवतीस्तबकमुपजहार तस्मै।

जगतीपतिस्तु गुश्तास्पाद् दुर्गतिग्रस्ताज्जुगुप्समानोऽपि तेन सह स्वदुहितुरुद्वाह निषेधितुमशक्नुवन् विवाहोत्सवानन्तरमेव तौ प्रासादतो नि सारयामास। ततश्चोभावपि विपिनगर्भमुपेत्य कस्या अपि पयस्विन्या परिसरे पर्णशाला पर्यकल्पयताम्।

गुश्तास्पो मृगयुपुङ्गवो बभूव। स हि प्रत्यह तर्या सरित्तीरान्तर प्राप्तस्तत कदाचिद् हरिण कदाचिच्चारण्यरासभ समानिनाय। आखेटफलस्य च तस्यार्द्धं नाविकाय वितीर्य शेष स्वस्त्रिया सकाशमानैषीत्।

अथ कदाचित् तारणिको गुश्तास्पस्य समीपे त दिदृक्षु कमपि माबरीननामान तरुण स्वात्मना सममानिनाय। आगन्तुकस्तरुण तमाह—"महाभाग, अह नृपतेरपरा पुत्रीं त्वद्दयिताया यवीयसीं

स्वसार परिणेतु स्पृहये। परमवनीशस्य विषये नितरामत्याहित विदधत वृक कमपि यावदह न हन्या तावत् तत्पाणिपीडनाय राज्ञा नानुमत स्याम्। न चावैमि कथ त हिस्याम्" इति।

तन्निशम्य लुब्धको गुश्तास्प त्वदर्थमहमेतत् कृत्य विधास्यामीति तस्मै प्रतिश्रुत्य तेन सह विपिन प्रति प्रतस्थे। तत्र गतश्च कोक-मवलोकयन्नेव स नाराचद्वयेन त नीचैर्निपात्य आच्छोदनच्छुरिकया तच्छिरश्चिच्छेद।

अवनीन्द्रस्तु विदितवृत्तान्तो विपिन गत तमीहामृग मृतमव-लोक्य परमप्रीतो द्वितीयदारिका माबरीनाय व्यतरत्।

अथ गणरात्रापगमे स नौवाह 'अहरुन'नामान कमप्यन्य युवानमवनिपतेस्तृतीयतनयामुपयियसु गुश्तास्पसमीपमानेष्ट। तेन हि प्रियापरिग्रहात् प्राग् अजगर कश्चिन्निर्कातितव्योऽवर्तत। गुश्तास्पश्च तदर्थमपि तदाश्चर्यकर्म प्रतिशुश्राव।

तद्वधाय च स सर्वत प्रसक्तनिशितशङ्कुनिवह व्रश्चनकन्दुकम् एक प्रकल्प्य मृगयमाण कदाचित् स्वफूत्कारोद्वान्तज्वालजाल तमजगरमभिजगाम। त समालोक्य तद्ग्रहादात्मान रक्षितुमितस्तत प्लवमानस्तत्काय स्वसायकै सपत्राकरोत्। अथ प्रसक्तनिशित-शङ्कु त व्रश्चनकन्दुक च कुन्ताग्रे समासज्य व्यात्ते व्यालवदने न्यवीविशत्। पिहितवदनस्तु स शयुर्धराशायी बभूव निजघ्ने च राजसूनुना स्वनिस्त्रिंशेन।

एवमहरुनो महीभुजस्तृतीयामात्मजामुपायस्त।

किमत्र चित्र यदचिरेणैव प्रचुरपराक्रमोऽसौ कुमारो दिवगते पितरि तदुत्तराधिकारी सन् पारसदेश शशास। तच्छासनसमये एव च जोरोस्टर इति प्रसिद्ध सिद्ध शुद्धात्मा जरदुश्तोऽहुर्मज्द-धर्म-

मनुशशास पारसवासिन । अहुर्मज्दो हि प्रकाशस्य भास्वतो विभावसोश्च सत्यस्य धर्मस्य न्यायस्य चाधिष्ठातृदेवताऽभ्युपेयते ।

*

गुश्तास्पो जगति प्रागेव स्वसदृश व्यवसाय पद वा न प्रापदित्यलक्षि युष्माभि । नानाव्यापारेषु व्याप्रियमाणोऽपि व्याहतप्रयत्न स आदौ सदाशयाऽयस्कारसदृशामनेकेषा रोषभाजनमजनिष्ट ।

तथापि पर्यवसाने स स्वानुरूपा पदवी प्रपेदे, किञ्च न यावल्लेभेऽवकाश विशा सुशासनस्य तावत् तासा यत्किञ्चित् साहाय्य समाचरन्नास्त ।

परोपकारेणैव गुश्तास्प पूर्वोपन्यस्तचरित स्वार्थकृतकर्मणैव सन्तुष्ट त काष्ठिक समतिशिश्ये। परोपकाराय स्वप्राणानपि तृणीकृत्य दोष्णो शौर्यमाविष्कुर्वंश्च स नरेशसूनु इतरेभ्य स्वस्य अतिरिक्तवित्तमात्र वितरतो वदान्याद् हातिमताईमहात्मनोऽपि महीयतेतराम् ।

न हि तस्य सम सम्मानास्पद कोऽपि लोके य स्वावलम्बन सन् निजबलेन न केवल स्वसमीहितानि साधयति अपि तु प्रतिवासिना स्वस्तिसमृद्धी अपि समर्द्धयति ।

आद्रियामहे वय त पितर यो यन्त्रविशारदो वा दारुभारिको वा, लेखको वा कर्षको वा, व्यवसायकरो वाऽयस्कारो वाऽनुसन्धायको वा, यो वा को वाऽपि भवन्, येन केनापि श्रमकर्मणा स्वात्मन स्वसन्ततेश्च सुखस्वास्थ्ये सप्रसूते। सत्कुर्मश्च त कर्मिण य. स्वस्य स्वसभूयकारिणाञ्च लाभाय तत्सहयोगेन सहकारित्व-

निष्ठानि कर्मशाला-पण्यागाराणि व्यवसायसङ्घाश्च सञ्चालयति प्रत्येकञ्च कर्मकृते स्वात्मन स्वत्वानि ज्ञापयितु प्रतिपादयितु च सुयोग सम्प्रदत्ते। सश्रूयते चैवमसहायजनस्य दीनहीनवचसा स्थाने समाजस्य समूर्जस्वल स्वर।

श्रमजीविनामेते समाजाश्च तान् स्वबलावलम्बन परस्परोपकारञ्चाप्यनुशासति।

विद्यार्थिन! युष्माभिरपि शिक्षकाऽऽदिष्टे कर्मणि बुद्धिमभिनिवेश्य तद्विभवान् वर्धयितुमभ्यासो विधेय, यथासामर्थ्यं च ज्ञानसोपानस्योत्तरादुत्तरे पदे पद निदधानैरनुसन्धेय सर्वदाऽवसर सहाध्यायिनो न्यूनधियोऽनधिकविदग्धस्य साहाय्य विधातुम्।

अप्सरसा कथासु किल केवल नामग्रहणेन प्रदीपतलघर्षणेन वा पिच्छिकापरिभ्रमणेन वा भूतवेताला प्रादुर्भूय नरान् सुरवर्त्मना सचारयन्ति, निमेषमात्रेण हर्म्याणि निर्मिमते किञ्च भुवो गर्भात् सादिना हस्तिनाञ्च सेना समुद्भावयन्ति।

परमितोऽपि महीयासि खल्वद्भुतानि सृजति पुरुषार्थ। स हि वसुमतीं सुतमा सस्यसम्पन्ना सपादयति, वन्यमृगान् विनयति, भूधरान् निर्भिद्य मार्गमादधाति, पत्तनानि निर्मापयति, सेतून् सवराश्च विरचयति, पयसि पोत व्योम्नि विमानञ्च चालयति, एवञ्च सर्वेषा सुखसुरक्षयोरेतावन्ति साधनानि समुत्पादयति।

ईदृगुद्योगेनैव नरो भद्रतरो नितरा न्यायशीलो निरतिशयसदयश्च सजायते। अयमेव च मूल यथार्थाऽभ्युदयस्य।



५

# धैर्यमध्यवसायश्च

पञ्चनदनिवासिना गानमिदमेकम्—

सदा ना बागी बुलबुल बोले।
सदा ना बाग बहारा।
सदा ना राज खुशी दे होदे
सदा ना मजलिस यारा।।

अर्थात्—

ऋतुर्वसन्तो न लसत्यनारत
न शारिका कूजति निष्कुटेऽनिशम्।
न राजते हर्षपरम्परा सदा
भवत्यजस्त्र न सुहृत्समागम ।।

अस्य पद्यस्यायमाशयो यन्नाशास्यमस्माभि सर्वदा सर्वघटना अस्मदाकाङक्षानुरूपमेव घटिष्यन्त इति। अयमेव च जीवनेऽनुशील- नीयानामुपदेशाना महिष्ठो यत् कथ धैर्यधारणमभ्यसनीयम्। न चाऽस्माक जीविते किल एतद्गुणानुशीलनावसरप्रदा दिवसा भूयासो नायन्तीति।

कल्प्यताम्, कदाचित् केनाऽपि नितरा कार्यव्यापृतेन पुरुषेण व किमपि प्रयोजनमापतितम्। तदर्थं तद्गेह गता यूय पूर्वमेव बहून् पुसस्त द्रष्टुमुपस्थितान् पश्यथ। तेन चाऽसौ स्वदर्शनप्रदानात् प्राग् युष्मान् सुचिर प्रतीक्षापरान् अकारयत्। तथापि यूय शान्त्या

प्रत्यपालयत चेत् कतिपयहोरावधि, धैर्यवन्तो हि यूयम्।

अथैकदा यूय कमपि दिदृक्षव तत्सदनमुपसन्ना त बहिर्गतमवित्त। अपरेद्यु पुनरपि तदावसथमुपयाता तद्द्वार पिहित प्रेक्षितवन्त। तृतीयवारमपि तत्र प्रयातेषु युष्मासु स आमयोपसृष्टतया युष्मान् द्रष्टुमशक्त। कतिपयदिनात्यये यूय भूयोऽपि त द्रष्टु तेनैव पथा प्रस्थिता तद्भवन प्रति। एर्ताहि, नूतनया कयाचिदितरघटनया विप्रतिहता अपि चेत् स्वसमीहितसाधनावधि यूयमभग्नोत्साहा एव—अयमध्यवसाय।

अध्यवसायो नाम भृशाभियोगात्मकमविरतकार्यव्यापृतिस्वरूप च धैर्यम्।

'जेनेवा'निवासी लोककीर्तित कर्णधार कोलम्बस पोतेन पश्चिमस्या दिशोऽविज्ञातवारिधि तरितु स्पेनदेशात् प्रतस्थे। व्यतीयुर्वासराननु वासरा सप्ताहाश्चानु सप्ताहा। स्वसहयोगिनां विषादोद्गारान् मर्षयमाणोऽप्यसौ अभिनवभुवोऽन्वेषणे दृढव्रतो ववृते। लक्ष्यप्राप्तौ बहुविलम्बितोऽपि व्याहतोऽपि च प्रत्यूहै पुन पुनर्नासौ स्वप्रयत्नात् तावद् विरराम यावत् 'अमरीका'परिसर-द्वीपान् नाधिजगाम। इत्थ च महाद्वीपमेक नवीनमेवान्वेषयाञ्चकार।

किमाशास्त स स्वीयसहायेभ्य? मन्निबद्धश्रद्धा इमे धैर्यमवष्टभ्य सप्रश्रय मे शासने तिष्ठेयुरित्येव समपैक्षत। किन्तु स्वध्येयमधिगन्तु तस्य स्वय को गुणोऽवश्यमाश्रयणीय आसीत्? स हि तमप्रतिहतमुत्साह सुस्थिरञ्च सङ्कल्पमपरिहार्यं व्यपैक्षत यः खल्वध्यवसाय इति स्मर्यते।

कीर्तिमान् कुम्भकारो बर्नार्ड-पालिसी-महाशय प्राचीनकाले प्रचलितस्य 'चीन'पात्रेषु चित्रविचित्ररुचिरवर्णविलेपनस्य विलुप्तं

रहस्य बुभुत्सुर्मासान् सवत्सराश्च भूयस अविश्रान्तमविरत तदनुसन्धाननिरतस्तस्थौ। रङ्गगवेषणोद्योगेषु तेषु सुचिर भग्नाश स हस्तगत सर्वमपि वित्त समुत्ससर्ज तस्मै कर्मणे। अहर्निशमसौ स्वविरचिताऽधिश्रयण्या पुरत समासीनो नवनवप्रक्रियाभि पात्रनिर्माण-पाक-प्रयत्नेष्वनवरतेषु एकतानमानसोऽदृश्यत। किन्तु न कोऽपि प्रोत्साहयामास त तस्मिन् व्यवसाये, कैव कथा साहाय्यदानस्य। अमस्त चोन्मत्तमेव त सर्वोऽपि तस्य प्रतिवासी वयस्यश्च। तत्कलत्रमपि त तत्कृत्येषु नितरा निनिन्द।

अर्थवैकल्याद् बहुश म तदन्वेषणकर्म विस्रष्टु विवशोऽभूत्, पर परीक्षणव्ययभारवहनक्षममात्र एव पुनरप्यपूर्वोत्साहेन तस्मिन् प्रावर्ततराम्। अन्ते चैकदोध्मानमिन्धितु स्वसद्मनि इन्धनमलब्ध्वा आक्रोशत्सु अपि भीषयत्स्वपि चाभ्याशर्वातिषु सम्बन्धिषु सोऽवशिष्ट सर्वमपि गृहोपस्कर दारुप्रकल्पित पावके प्रचिक्षेप। अहो! भस्मसाद् भूते तस्मिन् संभारे सोऽन्दिकाकवाटमुद्घाटयस्तान् सर्वानपि वर्णास्तत्र शोभमानानभिपश्यति येषामन्वेषणाय स प्रचुराणि वर्षाण्यनैषीत्। तैरेव चान्ते स विश्वस्मिन्नपि विश्वे व्यश्रावि यशसा।

को न्वसौ गुणो यस्य अभावे तस्य प्रिया प्रणयिनश्च साफल्यवेला प्रतिपालयितुमपारयन्त सतत सन्तापयन्तश्च तम्, तत्कार्य दुष्करतर चक्रु? धैर्यं हि तत् न किमप्यन्यत्। कश्चासौ गुणो य स न जातुचिदजहाद्, येन च भृश शालमानोऽसौ शेषेऽशेषा अपि विघ्नबाधा उपहासप्रहाराश्च पराभवितु प्रभुरभूत्? अध्यवसायबलं हि तद् यत् सर्वबलेषु प्रभविष्णुतमम्।

न किल तल्लोक्यते लोके यदध्यवसाय प्रतिरोद्धुमलम्। अतिगुरूण्यपि कार्याण्यविरतै प्रतनुप्रयत्नै पुञ्जितै सम्पाद्यन्ते।

अस्ति खलु, विशाला शिलोच्चया वर्षाशीकरैरविरलमेकत्र निपतनपरैर्नि शेष घृष्टा विनष्टाश्च।

स्वत सिकताकण किल न सत्त्ववद् वस्तु किन्तु तादृशा एव कणा एकैकश सहता सैकतवप्र विनिर्मिमाणा वारयन्ति वारि वारिधीनामपि।

प्राकृतिकेतिहासम् अध्येष्यमाणैर्युष्माभिरवेष्यते कथङ्कारमल्पिष्ठा अपि प्राणिन परस्पर समवेता अपाम्पतौ प्रवालपर्वतान्विनिर्मान्ति प्रकल्पयन्ति च पयसि सुन्दरान् द्वीपान् द्वीपसमूहाश्च सन्ततायासेन।

तन्न किं नु यूयमपि पारयथ निर्वर्तयितु परिलघुप्रयत्नैरनवरतै-र्महान्ति कार्याणि ?

*

केरल (मलाबार)-मौलिललामो ब्रह्मविद्वरो बृहद्यशा शङ्करो द्वादशशतवर्षप्रायपूर्व प्रादुर्बभूव। स हि बाल्य एव सन्यासमव-लम्बितु व्यवसितवान्, पर प्रशस्ताशयतामिमा तस्य प्रशसन्त्यपि तत्प्रसवित्री भूयासमनेहस त सन्यासमय जीवन यापयितु नान्वमन्यत।

एकदा सा ससुता सिष्णासु सरितमुपससार। तत्र च शैवलिनी प्रविशन्नेव शङ्कर स्वमङ्घ्रि ग्राहनिगृहीतमिवानुभवन् मृत्युमासन्न सममस्त। विकटवेलायामपि तस्या तदेव महदु-द्देश्यमनन्यचित्तेन चिन्तयन् स वीरबाल उच्चैराचक्रन्द—"गत एवाय जन। अपकृष्येऽह सरभस कुम्भीरेण। आशसे यदगृहीतसन्यास एव न म्रियेय" इति।

अवसिताऽऽशा तस्य प्रसू सबाष्पा कथमपि तथेति प्रत्यप-द्यत। अहो! अहोभाग्य च शङ्करस्य यत् तत्क्षणमेव तस्मिन्

तावती महाप्राणतोर्जस्वलता वा समुज्जजृम्भे यथा ग्राहात् पादं प्रमोच्य स उत्तीरं प्राप्तुमपीपरत्।

ततः परं वयसा सार्धमेव संवर्धमाने ज्ञाने स गुरोः पदवीं प्रपन्नः स्वलोकोत्तरजीवितस्यान्तिममुहूर्तं यावद् वेदान्तविद्याविस्तारमहाव्रतं प्रति एकनिष्ठोऽतिष्ठत्।

*

भारतानुरक्तनिखिलनरवृन्दविदितं महाभारताऽऽख्यं कमनीयकाव्यं बहुशताब्दीपूर्वं गीर्वाणवाण्या प्रणिन्ये। नातिचिरात् प्राङ् नाऽशकत् कश्चनापि पाश्चात्यपुरुषस्तत्काव्यमनुशीलयितुमृते त्रिदशभाषा-भ्यासात्, संस्कृतसमाराधनतत्परा यूरोपीयाश्च कराग्रगण्या एवासन् इति प्रतीच्यभाषाणामन्यतमया तस्यानुवादो व्यपेक्ष्यते स्म।

अवदानायैतस्मै स्वात्मानं समर्पयितुं धृतमतिर्बाबूप्रतापचन्द्रराय-महोदयः स्वदेश एव गीर्वाणवाणीग्रन्थस्य तस्याऽऽङ्गलभाषया-ऽवतारणेऽलङ्कर्मीणं किशोरीमोहनाभिधानं विद्वद्वरेण्यं गाङ्गुलि-गोत्रं स्वमित्रमासाद्य पुस्तकस्य तस्याऽध्यायानपरिसङ्ख्येयाननु-पूर्वशः प्राकाश्यमानैषीत्।

व्रते तस्मिन् स्वावधारिते द्वादशवर्षाण्यविश्रान्तं व्यापृतोऽसौ सर्वमपि स्वं स्वकीयं तत्पुस्तकप्रकाशन एव निःशेषतां गतमवेत्या-ऽकिञ्चनः सन्, तत्प्रकाशनार्थं वित्तवितरणक्षमं प्रत्येकमपि पुरुषं साहाय्यमभ्यर्थयितुं भारतवर्षस्य प्रान्तात् प्रान्तं परिभ्राम्यन् क्षिती-श्वरादपि क्षेत्रेश्वरादपि सुशिक्षिताच्चाप्यशिक्षिताच्चापि यूरोपीया-दप्यमरीकादेशीयाच्चापि सुहृद्वृन्दाद् दानमासीसदत्। पर्यटनेषु तेष्वर्थसङ्ग्रहार्थेष्वन्यतमे स ज्वरेण केनापि प्राणहरेण पीडित-

पुरन्दरपुरातिथिरभूत्। व्याधिव्यतिकरेऽपि च तस्मिन् तद्व्रतपूर्ति-चिन्तनैकचित्तो दु सहदेहदाहदह्यमानहृदयत्वाद् व्याहर्तुमनर्होऽपि स्वदारान् समुदैरयत्—"नियतमेव तीरयितव्यमेतत् पुस्तकम्। एत-त्प्रकाशनकृते ते पुष्कल धनमावश्यक स्यादिति कृत्वा मा कृथा वृथा व्यय मद्दाह-श्राद्धादिकार्थम्। त्वमपि च महाभारतप्रकाशननिमित्तं वित्त सुरक्षितु यथासाध्य परिमितव्ययैव यापये र्जीवितम्।"

तदेव भारतस्य भारतस्य च तन्महाकाव्यस्य कृते स्नेहसान्द्र-हृदयोऽसौ स्वासूनहासीत्।

विधवा सुन्दरीबाला-रायमहोदयाऽप्यनन्यनिष्ठया तस्य सुमहद् अभीष्ट निष्पादितवती। अनुवादकर्ताऽप्यब्देनैकेनैव निर्वर्त्य अनु-वादाऽवदान महाभारतस्यैकादश खण्डान् यूरोपवासिना पुरस्तात् उपन्यस्तवान् येन तेऽपि तस्य भव्यबृहत्काव्यस्याऽष्टादश पर्वाणि पठितु तद्गरिमाण च गातुमकल्पन्त। अनुशील्य च महाभारतं भारतवर्षस्य विपश्चिद्वराणा कवीश्वराणाञ्च प्राक्तनाना परम-प्रतिभा गभीरज्ञान च हृदयङ्गममकार्षु।

ईदृशि ननु फलानि प्रतापचन्द्ररायप्रभृतीना कर्मकुशलाऽध्यव-सायतत्पराणा पुसा पुरुषार्थस्य।

भद्रा बाला! अपि नाभिरोचते वस्तेषामतिप्रभूताना नराणा नारीणाञ्च श्रेणीमारोढु ये शुभकर्मभ्यो न कदापि क्लाम्यन्ति न वा विरमन्त्यनिर्वर्त्य तानि।

बृहत्यस्मिन् ब्रह्माण्डे न खल्वभाव करणीयाना सत्कर्मणा न वा तत्समारम्भकृता सुकृतिनाम्, किन्तु यदिह दुर्लभप्राय स किला-ध्यवसायो नाम। स एव च केवल तानि निष्पादयितुमलन्तम.।



६

# सरलजीवनम्

अरबवासिप्रबोधनसर्मापितसमस्तजीवित ईशदूतो मुहम्मदो धनहीन सुखसौहित्यसाधनरहितश्चासीत्। एकदा निशाया स कस्मिश्चित् कठिनकटे सवेशवशो बभूव। प्रातर्जागरितस्य तस्य गात्रे किलिञ्जस्य रज्जूना ग्रन्थीना च चिह्नानि स्फुटमलक्ष्यन्त। तानि सलक्ष्य तत्सख कोऽपि तमाचचक्षे—"ईश्वरसदेशहर! अतिशय-कर्कशेय शय्या युष्मत्कृते। मामशासिष्यच्चेच्छ्रीमान् सहर्ष मसृणमसृण स्रस्तर प्रस्तूयाऽऽस्तरिष्य येन हि तत्रभवान् सुखशयितोऽभविष्यत्।"

ईशदूत प्रत्यवदत्—"मित्र, मृदुलतल्प न मदनुरूपम्। अस्ति हि मयाऽत्र लोके साधनीय किमपि सुमहत् कार्यम्। अतो यथा कोऽपि सादी स्वसप्तिमातपोत्तापात् परिपातु पलमेक कस्यापि तरोस्तले व्यपनीतपर्याण विधाय पुनरपि च दत्तपर्याणमधिरुह्य पुरत प्रतिष्ठते, तथाऽहमपि श्रान्त विश्रान्त्यपेक्ष स्वशरीर केवल विश्रमयाम्येव।"

'मयाऽत्र लोके साधनीय किमपि सुमहत्कार्यम्' इत्यवदत् ईशदूतो मुहम्मद, तेनैव च तस्य अभिजातजीवितमार्जवमभजत। वनायुवास्तव्याननुशिशासिषो स्वध्येयबद्धश्रद्धस्य च तस्याऽत्युच्च-विचारर्चचितचेतस्त्वात् सुखभोगसभारेषु नासीत् स्वल्पाऽपि वासना।

*

न हि विमलमनसा सरलजीवितमिव जगति किमप्यन्यत् सुखावहमिति समाख्यास्यमानोऽरबदेशीयवृत्तान्तो निदर्शयत्यस्मान् ।

'मैजू'नाम्नी काचन खल्बवशजा बाला निजबाल्यकाल कस्मिश्चिद् विताने धन्वनि विततेऽतिवाहयाञ्चकार ।

अथ कदाचित् खलीफोपाह्वो 'मुआवया'समाह्वयो युवा तामुपायस्त। सत्यपि सम्पत्समृद्धे समधिकदाससेविते च मुआवयामहोदये सा तेन सह निवसन्ती नैव प्रससाद नाससाद च प्रचुरैश्वर्यपरिवृताऽपि मनस प्रसादम् । तस्माच्चैकान्तगता सा प्रायशोऽरबीभाषाया स्वविरचितपदान्येवविधानि सुमधुरस्वरेण गायति स्म--

वेषान्मे महिषीवृतादतितरा श्रीशालि तद् भासते
चैल बभ्रुरुचि त्वचा विरचित रुच्य महाङ्गस्य यत् ।
प्रासादाच्च सुभूषिताद् बहुतरै कोष्ठैर्विशालैर्भृश
वासायाऽप्युपकारिका सुखतरा मेऽसौ तता या मरौ ॥१॥
मद्देशाऽरबवस्त्रवेश्म परित क्रीडत्किशोराश्च ये
भूषाशालिसुपुष्टवेशरगणादत्यन्ततूर्णा हि ते ।
भाति श्रव्यतर च मा सुभषण रक्षाशुना पश्यता-
मायान्त, गजदन्त-तूर्यनिनदाच्छुद्धान्त-सरक्षिण ॥२॥

श्रुतिपथर्वातषु पदेष्वेतेषु खलीफामहोदयस्ता स्वनिलयात् निरवासयत् । ततश्च सा कवयित्री बन्धुबान्धवसन्निधौ प्रतिनिवृत्ता महाभवन तद्वैभवमय न भूयो निभालयितास्मीति विभावयमाना अमन्दानन्दमविन्दत यतो हि तत्र सा दुरमनायतैव केवलम् ।

*

विजयतेतरा सरलजीवन जीवनाद् भोगैश्वर्यमयाददभ्रदर्पादाडम्बर-बहुलात्। दृश्यते च अद्यश्वो मनीषेय समुन्मिषन्ती प्रायशोऽशेष-देशाना पुरुषेषु भूय सु। प्रत्यहमुपचीयत एव च तथाविधाना जगति जनाना सख्या ये सत्यपि महार्घपरिबर्हक्रयसामर्थ्ये चिन्तयन्ति स्वधनस्य समुचिततरोपयोगप्रकारम्, अभिनन्दन्तितरा हितमित-मशन महामूल्यस्वादिष्ठभोजनेभ्य, स्पृहयन्ति च स्ववेश्मानि सुभूष-यितु सुरुचिपूर्णोपकरणकलापायैव न तु बाह्याडम्बरमात्रफलाय महार्हसभाराय।

युगे युगे भवाभ्युदयाय विहितजीवितोत्सर्गास्तेजस्विनो जन-तल्लजा शान्तिमय सरल च जीवितमत्यवाहयन्त। तादृश जीवन जनानामारोग्य सपादयत् तेषा जगन्मङ्गलसाधनकारिताम् अधिकाधिक समेधयति। तादृशा नृणा निदर्शनञ्चाहर्निश ह्रिय-माहरति हृदयेष्वपरेषामपहरति च मुखश्रिय तेषा निष्कारणराशीकृतै-श्वर्याणा वृन्दिष्ठवेशभूषा-भुजिष्य-परिच्छदपरवशाना पूरुषाणाम्।

किञ्च, यथा क्वचित् गर्तखननमन्तरेण न पार्यते निर्मातुमपरत्र वप्रम्, तथैव एकस्यैश्वर्यं प्रायशोऽन्येषा दौर्गत्यनिमित्त भवत्येव। किन्तु सत्स्वपि ससारे महत्सूत्तमोत्तमहितकर्मसु साध्येषु किमिति मन्द-धियोऽपि मनुजा निजसमय मुधा यापयन्तु सम्पदमवसादयन्तु मतिमपि च मोघता नयन्तु ?

*

प्राक्काले फ्रास्वा नाम कोऽपि साधु सज्जीवनस्य प्रसारयिता प्रभुद्तो बभूव। स हि न जात्वर्थमुपार्जितुमुपदिदेश। स्वय सरलजीवनश्च सदुपदेशेन स्वनिदर्शनेन च परानुशासत् सप्राप्त-

रतिस्तेभ्यो लब्धेन येन केनापि प्राश्येन तुतोष।

एकदा सोऽध्यात्मबन्धुना 'मातेओ'नाम्ना सहायेन सह विचरन् किमपि पुर प्राप्नोत्। तत्र चोभावपि विभिन्नवीथी अवलम्ब्य भिक्षा भ्रमितुमारभेताम्। मातेओमहाशय प्राशुतया शोभनरूपत्वाच्च प्रभूतभिक्षामुपार्जयन्मनुजेभ्य, तपस्वी फ्रास्वास्तु ह्रस्वतयाऽनतिमनोहरविग्रहत्वाच्च स्वल्पमेवाऽऽहार समाहर्तुमार्हत्।

ततश्च पुरद्वाराद् बहि समेत्य तौ प्रत्यासन्नाया प्रसन्नसारण्यास्तीरे विशालशिलातल किमप्यन्वास्य तद्दिवससङ्गृहीता समस्तसामग्री स्वात्मन पुरस्तान्न्यस्तवन्तौ।

तदा तद् भोज्यजात निभालयन् फ्रास्वा प्रफुल्लवदन समवदत्—"भ्रातर्मातेओ, नार्हिष्म वय विशिष्टान्नमीदृश किल!"

"हहो, पिष्टकशकलान्येतानि कतिचित् कि मिष्टान्नवद् दृश्यन्ते त्वया? नास्मदन्तिके फलक न तदाच्छादन, न व्रश्चन न छुरीचमसादिक नापि च परिचारक कश्चित्" इति प्रत्यवोचन्मातेओ।

तच्छ्रुत्वा साधु सबभाषे—"अशनायितेन शोभनशिलातले निवेशित शुद्धमन्न पिपासितेन च स्वच्छप्रस्रवणस्य सुशीतल सलिलमासादित स्याच्चेत्, अपि नामाऽसाम्प्रत तत्प्रीतिभोज इति व्यपदेष्टुम्?"

न ममाऽयमाशयो यत् तिष्ठतु नाम निर्धनो नरो निजनिस्वतयैव नित्यसन्तुष्ट, किन्त्वविद्यमानेऽपि बाह्यैश्वर्योपकरणसभारे महिमोज्ज्वलजीविताना महात्मना हृन्मन्दिराश्रयौ सन्तोषप्रसादौ स्थूलसम्पदा पद सप्रतिपद्येते इत्यसन्दिग्धमेतत्।

*

वितर्कातिक्रान्त किलैतद् यत् सरलजीवन न कस्याप्यपकाराय कल्पत इति। परम्, अशेषविधद्रव्यैश्वर्यराशिनिषेवि जीवन तु न तथा। अनर्थाय च प्रायो निरर्थकद्रव्यसङग्रह पुसाम्।

विख्यातक्षितीश्वरेऽकबरे शासति वसुमतीमागरानगर बनारसीदाससञ्ज्ञ कश्चन जैनमुनिरध्यवसत्। एकदा महाराजस्त निजराजमन्दिरे सनिमन्त्र्य निवेदयामास—"यथाभिरुचित याचतु मां भगवान्, ईश्वरभक्तोऽत्रभवानिति पूर्णकाम करिष्यामि श्रीमन्तम्।"

"प्रभूत दत्तवदस्ति मे परब्रह्म", साधु प्रत्युवाद।

"तथापि प्रार्थ्यता किञ्चित्", अकबर सनिर्बन्धमब्रूत।

"एव चेत् प्रभो अभ्यर्थयेऽह यथा भूयोऽत्र हर्म्ये न समाह्वातव्योऽस्मि, यतोऽहमनेहस स्व सर्वमपि शर्वसेवाया समर्पयितुमीहे।"

"तथाऽस्तु", अकबरोऽब्रूत, "परमस्ति ममाप्युपनाथितव्यं किञ्चित्।"

"विज्ञाप्यता, राजन्!"

"प्रसादनीयोऽयमहमुपदेशेन केनापि यमह सर्वदा स्मर्तु परिपालयितु च प्रभुर्भवेयम्।"

पल परिभाव्य बनारसीदास समब्रूत—"श्रीमतामशन पवित्र पथ्यञ्च स्यादित्यवधीयता नित्यम्, विशेषतो निशाया प्राश्य पेयञ्च निपुण परीक्ष्य ग्राह्यम्।"

"श्रीमदुपदेश न जातु विस्मरिष्यामि"इति महीश्वरस्त विश्वासयामास।

साधोरुपदेशोऽसौ श्रेयस्करोऽभूदिति नात्र सशीतिलेशोऽपि। स्वास्थ्यावहे हि सात्त्विके खाद्यपेये। नीरुजा तनुरेव च युक्तमायतनम् अवदातजीवितस्य विमलधियश्च।

साधुदर्शनदिवसस्य तस्य 'रोजा'व्रतवासरत्वाद् वसुमतीन्द्रेण वासतेय्यास्तुरीययामे व्रतान्ते सति अन्न सेवनीयमासीत्। तस्माच्च प्रासादस्य सूदा प्रदोष एव प्राशनद्रव्याणि श्रपयित्वा परिवेष्य च रजतमहारजतपात्रेषु पवित्रोपवाससमाप्ति प्रतिपालयन्त आसत। त्रियामायास्तृतीययामेऽभ्यवहार्यमकबरस्य पुरस्तादुपस्थापयाञ्चक्रे परिचरै। पारणान्ते प्राक्तु त्वराऽऽतुरस्यापि तस्य बनारसीदासवचासि सद्य स्मृतिमुपसृतानि "भोज्यपेये सूक्ष्म समीक्ष्य सेवितव्ये" इति। अतोऽसौ पुरत प्रस्तुत भोजनभाजन निपुण निभालयन् तत्र पिङ्गलपिपीलिका प्रसर्पन्ती शतशोऽभ्यपश्यत्। सविशेषमवहितेष्वपि सेवकेषु ता भूभुजो भोजनमभिपत्याऽऽविलयाम्बभूवु।

नरपति पात्र प्रतिप्रेषयामास। तेन वृत्तेन च बनारसीदासप्रबोधन हितसाधनतया तद्धृदि पदमलब्ध।

विदितमेव भवेद्वो यद् बनारसीदासोऽकबर न केवल कपिलपिपीलिका अधिकृत्याऽप्रमत्ततया वर्तितु व्याहार्षीत् अपि तु तनुमनसो. अहितकरस्याऽऽहारमात्रस्य सेवन वर्जयितुमेव त तथा व्यजिज्ञपत्। तथा चाहु—अपथ्य हि रुजा बीजम्।

अत एव, अखाद्यमिद द्रव्यमिति विदन्तोऽपि तद्विक्रयपराः व्यापारिण पौरजानपदाना जीवितव्येऽपराधममर्षणीयमाचरन्ति। अखाद्येन चात्र न वय केवल पूति पर्युषितमपमिश्रित वाऽशनमभिप्रेम. अपि तु कथमप्यपकारपर कुभोज्यजातम्।

*

अकबर स्वचषकेऽपि कपिशपिपीलिका प्रैक्षतेति न कथितम् अस्या कथायाम्, पर बनारसीदासस्तु त पेयपदार्थेष्वपि प्रबुद्धवद्

व्यवहर्तु व्याहरत्।

यतो हि नयनासेचनके चकासति चषके तद्वर्तिततरलद्रव्य स्वादुतर मदीपनञ्च प्रतिभासमानमपि महदहितमावहति व्यवहर्तु, तथा हि—पेयेषु मद्य परमापदा पदम्।

द्यूत मद्यपानञ्च पातके इत्युपादिशत् पुरुषान् सिद्धो मुहम्मद। अतश्च कुरानवचन-विश्वासिनो न निषेवन्त एतदुभयम् अनुभवन्ति च तल्लाभम्।

तथापि प्राप्यन्तेऽत्र ससारे सर्वत्रापि तादृशा सत्पुरुषा ये सुरापानमम्साम्प्रत न मन्यन्ते। अपि अभ्युपगच्छेम वय तेषा मतम्। तथाप्यासवाऽऽसेवन दोषदूषितमिति तु न तेऽप्युत्सहेरन् प्रतिपादयितुम्।

अथ शीधुपानमशुभ सभावयन्ति चेत्केचित् तदेवापरे वरेण्यमिति वृणते। तदपि न नामाऽननुतर्षण गणयत्यवगुण गुणी कोऽपि। सरको हितकरो न वेति सन्देहतुलामधिरोहतु प्रकामम्, किन्तु असुखकर सरकत्याग इति तु न सकीर्तयेत्कृती कोऽपि, प्रत्युत सर्वथापि मितव्ययात्मकोऽयमित्युदीरयेत् ऐकमत्येन लोक।

अतश्च दरीदृश्यन्तेऽद्य देशे देशे पानसयम-तदप्रसक्तिप्रसारयित्र्य समितय। विरस्यामो वयमासवस्पर्शादिति शपथपूर्वं शसन्ति च तासा सदस्या। किम्बहुनोक्तेन, वारुणीविक्रयोऽपि च केषुचिन्नगरेषु निषिद्धो लक्ष्यते।

येषु देशेषु पुनर्जनानामद्यावधि मद्यस्य नामाप्यविदितप्रायमासीत् तत्राप्येतस्य पानमारप्सत साम्प्रत पुमास। तथा हि, भारते वर्षे ह्यनुतर्षणम् आ वर्षशतेभ्यो निषिद्धमपि सत् साम्प्रत प्रवर्तमान लोचनगोचरायते। दारुणतर त्वेतत् कस्माच्चिदपि पौराणिकराक्षसात्। वपुषोऽनिष्टकरा ननु पुराणवर्णिता भीषणनिशाचरा,

मनोवाक्कायशक्तिविनाशकारिणी पुनर्वारुणी। तथा च पूर्वमिय कलेवर विकुरुते। तेन च पित्रोरासवव्यसनिनो सुतानामपि अपाय तनोस्तनोति। ततश्च तेषा मति निमीलयन्ती सभविष्यतः सर्वभूतसेवकानपि तान् स्वदासीकरोति। यत्सत्यमस्मासु प्रत्येकमपि जनेन जनताजनार्दनसेवाव्रतेनैव वर्तितव्यम्। किन्तु यदि वयमन्नेन पानेन वा तनुमनसी नि सत्त्वे विधास्यामस्तर्हि स्वकार्यं कर्तुमसमर्था किसेवका एव भविष्याम।

कि कुर्मस्तेन शस्त्रभृता यस्य शस्त्र विशीर्णम्? कि तेन नाविकेन यस्य नाव कूपको विलुप्त? कोऽर्थस्तेन सादिना यस्य तुरङ्गः व्यङ्गता गत? तद्वदेव कि प्रयोजन तेन जनेन यस्य महामूल्यशक्तयो विनष्टा? पशोरप्यपकृष्टतर किलासौ यत पशुरपि तावन्नापथ्यमुपभुङक्ते पिबति वा।

आसीत् रोमनकविर्विरजिलो ग्रामवासप्रियो नितराम्। हृष्टपुष्टवृषभा ह्यभवस्तस्य प्रेष्ठा यतस्ते क्षेत्रमुत्कृष्य सस्याय प्रस्तुवन्ति सीताम्। दृढाङ्ग हि तेषा गात्रमुपचितश्च पेशीचय। दुष्करश्चासौ श्रमो यस्तैरनुसवत्सरमवश्यमनवरत चानुष्ठेय।

विरजिलो ब्रूते—"मदिष्ठा मिष्टाशन वा न निषेवते वृषा। शादमास्वादते, प्रवहत्स्रोतोवहाना निर्मलनिर्झराणा वा वारिणा तृषा शमयति। न च विचालयति चिन्तालवोऽपि तस्य निरुद्वेगनिद्राम्।"

वीर्याय सयता स्यात।

'भूयास्त निस्तेजस' इत्याशसमानाय यूय रुष्टा न भविष्यथ किम्?

बृहयते हि बल बलवतामन्नपानसयम. समवति च तद् दुर्बलानाम्।

न हि जातु विस्मर्यता बनारसीदासोपदेश—

"भोज्याभोज्ये परीक्षस्व पेयापेये तथैव च।"

७

# दूरदर्शिता

शर सम्प्रेष्य विध्यति शरव्य तस्मिन्नार्यतरुणे तारस्वरेण समुच्चचार कश्चित्––"साधु विद्ध, साधु।"

कोऽप्यपरोऽब्रवीत्––"आम्, पर देदीप्यमानो दिनकृदिदानीम्। तेन हि वेध्यमीक्षितु क्षमस्यैतस्य धर्नुविद सिध्यति किल सायक स्वलक्ष्ये। तदपि नाय दशरथस्य तुला बिभर्ति शरव्यवेधे।"

"कि कर्तुमल दशरथ ?"

"स हि शब्दवेधी।"

"किमाकूतमेतस्य ?"

"शब्दमात्रसहकारेण हि स विदधाति स्वलक्ष्यवेधम्।"

"एतेन किमभिहित भवति ?"

"अवधीयता तावत्, प्रभवति स तमस्यपि प्रेरयितु सायकम्। निशायामरण्य यातश्च तूष्णी शब्द निशाम्यन्, पदपातेन पतत्रास्फालनेन वा श्रुतिगतेन वध्याना मृगविहगाना वर्गविशेष विनिश्चित्य विशिख विमुञ्चति, स्पष्टप्रत्यूषे विसृष्टशर इव च सिध्यति स्ववध्यवेधे।"

एव खल्वयोध्यापुरीयुवराजस्य दशरथस्य यश कर्णाकर्णिकया अश्रूयत विश्वतोऽपि।

शब्दवेधवैदग्धीगर्वित स गीयमान स्वयशो निशम्य नितराम-

तुष्यत्। प्रतिदिवसमेकाक्येव सन्ध्यासमये स्यन्दनमध्यमध्यास्य मृगव्यमार्गितु घनगहन गतोऽसौ कदाचिद् वनमहिषस्य द्विपस्य वा सलिलपानाय नदीमुपेतस्य पादन्यासम्, कदाचिच्च द्वीपिनो निभृतम्, पृषतो वा पेलव पदध्वनि शुश्राव।

एकदा स तमस्विन्या स्तम्बनिवहान्तराले निलीय पर्णमर्मर वारिघर्घररव वा एकाग्रतयाऽऽकर्णयन्नास्त। तया च कालकलया कासारतीरे कस्यापि प्रसर्पणरवस्तत्कर्णगोचरो जज्ञे। अन्धतमसत्वात् तदानी स्तोकमपि न किल प्रतिभासते स्म तस्य? पर कि तेन? अपि नासौ सुप्रयुक्तशर शब्दवेधी? ध्वनिरेवाल तस्य। द्विरदोऽय ध्रुवमिति विनिर्धार्य स सायक विससर्ज। मुक्तमात्रे च सायके 'त्रायताम्! त्रायताम्! हा हतोऽस्मि!' इत्यार्त्तनादो दिवमनुनादयन् विस्मयाऽऽविष्ट विदधे दशरथम्। सहसैव विस्रस्त तस्य शरासनम्, साध्वसेन स्पन्दित च स्वान्तम्। 'अहो किन्न्वचेष्टेऽहम्, अपि वनपशुमिषेण मानुष सारुषमकार्षम्' इत्येवमादिभिर्वितर्कैराक्रान्तो वेगेन वनमवगाहमान स सरसीमुपसृतस्तद्रोधसि रुधिराक्त विकीर्णकेश पूरणीयकलशपाणि कमपि तरुण क्षितितले विचेष्टमान ददर्श। स युवकस्तु तमवलोक्य चक्रन्द करुणकाहलेन स्वरेण—"महाशय, कि भवतैव विसृष्ट एष प्राणान्तको बाण? किमपकृत मया भवतो यदेव व्यवहृत मयि? ऋषिकुमारोऽह श्रवणकुमार इति नाम्ना। दृष्टिविकलौ मे पलितौ पितरौ। अहमेव तौ सेवे, सकलमप्यन्नोदकादिकमुपकल्पयामि च तत्कृते। तन्निमित्त तोयमानेतुमायातोऽयमह न शक्ष्यामि इन पर शुश्रूषितु तौ। तस्मादनेन वर्त्मना तत्कुटीरान्तिकमुपेत्य निवेदयितव्यौ तावुदन्तमेत यथावृत्तम्। प्रस्थानाच्च पूर्व नि सार्यता ममोरस्तो नितरामरुन्तुद शरोऽयम्।"

तत्सश्रुत्य दशरथस्तस्याऽरुष शल्यमपचकर्ष, श्रवणश्च चरमं निश्वस्य कीर्तिशेषतामयासीत् ।

ततो नृपतिपुत्र पात्र परिपूर्य पयसा, म्रियमाण-कुमारप्रदर्शित-पथेन प्रस्थित । सप्राप्त एव तस्मिन् श्रवणपर्णशालापरिसर, तत्पिता एवमालपितवान्—

"तात, किमिति चिरायितमियदद्य ? अपि सरसि स्नान-पर समासी ? कदाचित् कस्याञ्चिदापदि पतितस्त्वमित्यतर्कयन्नो-ऽन्त करणम् । किन्तु कुतो नु न दीयते प्रतिवाक्यम् ?"

विरतवचसि तस्मिन् भग्नस्वरेण दशरथोऽभ्यधत्त—"महात्मन्, नाहमात्मसभवो भवताम् । राजन्योऽहमन्यतम । अविद्येऽद्यावधि धनुर्विद्यावलिप्त । अद्य पुनर्यामिन्या मृगयायै गहन गत सरोवर-रोधसि सलिल सेवमानस्य हस्तिन इव कस्यापि वनसत्त्वस्य स्वनं निशम्य प्रैषयं शल्यमभिशरव्यम् । हा हन्त ! तद् भवत्सुतस्योरसि सप्रोतम् । आ, उच्यतामुच्यता कि प्रायश्चित्तमाचरेय दुश्चेष्टित-स्यैतस्य ?"

तद् विदित्वा सार्तनाद परिदेवमानौ तौ वृद्धदम्पती प्रत्यूदतु— "प्रापयाऽऽवा त पल्वल यत्राऽऽवयोरेकमात्रमपत्य मृतपतितमास्ते ।" समुपेत्य च प्रेत तौ मन्त्रानामनन्तौ शुचिसलिल तस्मिन्नसिञ्चताम । तदनु ऋषिरशपत्—

"शृणु दशरथ ! त्वदवद्यादेव आवामद्य स्ववत्सलसुतनिमित्तमस्र-धारा. स्रावयाव, एवमेव त्वमप्येकदा प्रियतनयकृते ध्रुव सतप्स्यसे । बहुसवत्सरानन्तरम् आपतिष्यन्नप्येष दण्डस्त्वयाऽवश्य भोग्य एव ।"

ततश्च मृतस्य अन्त्येष्टिकृत्याय चिता कृत्वा तौ स्वयमपि ता दह्यमानामधिरुह्य भस्मसात् सवृत्तौ ।

अथ व्यतीते बहुतिथे काले पङ्क्तिरथ साकेतसिंहासनमलञ्चकार। कालक्रमेण स कौसल्यया सह विवाहं निर्वाह्य तस्यां तेजस्विनं तनुजमजीजनद् यो हि राम इत्यगीयत जगत्यां जनैः।

अयोध्याधिपतेस्तस्य द्वितीयदयिता कैकेयी तद्दासीञ्चान्तरेण समस्ता अपि प्रजा रामेऽनुरज्यन्ते स्म। ते उभे तु अभद्रे वामे रामभद्रस्य विप्रकृतये कपटोपायानकल्पयताम्। तयोरेव हि दुष्टमन्त्रणया दाशरथिश्चतुर्दशवर्षवनवासाय सम्प्रेषयाम्बभूवे।

एवं निर्वासिते स्वसुते दशरथस्तद्विरहे तथैव विललाप यथा तौ वृद्धपितरावर्द्धरात्रे पल्वलप्रान्तपरित्यक्ताऽसवेऽल्पवयसे स्वपुत्राय विलेपतुर्विपिने।

एष दशरथो हि कदाचित् स्वशब्दानुपातिशरवेधनैपुण्यात् तथा गर्वमुवाह यथा तस्मिन् दूरदर्शिता लेशमात्रमपि नाऽवाशिष्यत। न हि तस्य सकृदपि स्फुरिता मतिरियं यथा तिमिरे शरनिपातनेन मे कश्चित्पुरुषोऽपि कदाचित् प्राणसंशये पतितः स्यादिति। यदि त्वसौ ज्वलत्येव सवितरि प्रखरतेजसि शरविसर्जनं व्यधास्यत् तर्हि तदमुष्य शब्दवेधवैदग्ध्यमदान्धतायाः साधीयः समपत्स्यत। परं प्रकृत्यैव सोऽनपचिकीर्षुरप्यविमृश्यकारी।

*

अथैकदा वाराणस्यां वाणिजः कोऽपि द्वौ वयोवृद्धगृध्रौ विपद्ग्रस्तौ विलोक्य कृपयाऽऽकुलः सन्नाश्यानप्रदेशमानैषीत्। तत्र च स प्रदीप्य तनूनपातं तत्ताप तौ पर्यसेवयत् समाशयामास च मासशकलानि पशुश्मशानाऽऽहृतानि।

अथ कालेन स्वस्थावाप्यायितौ च तौ प्राप्ते तपात्यये समुत्पत्य

कमपि पर्वत प्रयातौ। अनन्तरञ्च काशीपुर्या पण्योपजीविन त प्रत्युपकर्तुकामौ यत कुतोऽपि यानि कानि वासासि हस्तयित्वा स्ववयस्याय वत्सलाय समुपायनीकर्तुं मनस्यकुरुताम्। तथा सप्रधार्य गृहाद् गृह ग्रामाद् ग्राममुत्पतन्तौ सूर्यातपे प्रसारितानि परिधानानि समुद्धृत्य तस्य वणिजो वासे न्यस्यत। स तु तयोस्सदाशय प्रशसन्नपि तदपहृतानि परिधानान्यप्रयुञ्जानोऽविपणमानश्च सगृह्य स्वगृहे सावधान निदधाति।

अत्रान्तरे तौ पाशयितु सर्वत्रापि पाशा प्रास्तारिषत। एकदा तयोरन्यतर किल तेष्वन्यतमे न्यपप्तत्। स हि नृपते पुरस्तादानीतस्तेनानुयुक्तश्च—"कुतो रे मत्प्रजाना चैलाश्चोरयसि त्वम्" इति।

गृध्र प्रत्यगदत्—"कदाचित् कोऽपि वैदेहको मम मत्सहोदरस्य च प्रियान् प्राणान् परिररक्ष। तदृणमपाकर्तुमावा वसनान्येतानि समानीतवन्तौ" इति।

अथ स व्यवहारी महीपते पुरत समाहूतस्तेन पृष्टश्च प्रत्यभाषत, "प्रभो, गृध्रौ मे प्रभूतानि परिधानान्यानीय प्रादत्तामद्धा, किन्त्वह तानि सकलान्येकस्मिन् स्थाने स्थापितवानस्मि प्रस्तुतश्च तानि प्रतिदातु तत्तदधिपेभ्य।"

तदाकर्ण्य क्षितीन्द्रो दाक्षाय्यावक्षमत यतस्तौ निर्विवेकौ स्वकीय कृतवेदित्वमावेदयितुमेव तत्कार्यमकुरुताम्। सार्थिकोऽपि च समीक्ष्यकारितया व्यसनाद्विमुक्त।

*

जापानदेशे दूरदर्शिता सशरीरेव निदर्शिता दृश्यतेऽस्माभि। तत्र

हि कस्मिश्चिन्मन्दिरे शतदलनिषण्णस्य ध्यानमग्नस्य अमिताभबुद्धस्य कापि मूर्तिर्वर्तते। तदभिमुख शिलाशिल्पे बालवलीमुखास्त्रयश्चित्रिता लक्ष्यन्ते। तेष्वन्यतमस्य हस्तौ नयनयोरन्यस्य च श्रुतिविवरयोर्वर्तेते। तृतीयस्य चास्य तदीयहस्ताभ्या पिहितमास्ते। अपि वो विदित तत् कपित्रय किं प्रतिपादयतीति? तत्र प्रथम स्वचेष्टयाऽऽचष्टे—"नाहमशुभमसुभग वा किमपि पश्यामि।" द्वितीयो द्योतयति—"नाह तत् कर्णे करोमि।" तृतीयस्तु—"नाह तदुदीरयामि" इति।

एवमेव प्रेक्षावान् यत्किमपि पश्यति श्रृणोति शसति वा तत् सर्वं सदसद्विवेकपूर्वकमेव।

स हि परिर्णात परीक्षते विभावयति च भवितव्यम्। यदि च तस्य न परिस्फुरति पन्थास्तर्हि स पृच्छति पथिप्रज्ञ कमपि।



८

# सत्यनिष्ठा

अथैकदा कस्मिंश्चित्काननोद्देशे कश्चित्कण्ठीरवो वृक खिङ्खिर-श्चैकीभूय मृगया कुर्वन्त कुरङ्गम गर्दभ शशकञ्च व्यापादयन्।

तत्सकलमपि मृगव्यफल स्वसम्मुखमुपस्थाप्य मृगरिपुरीहामृग-मुदगिरत्—

"ब्रूहि रे भद्र वृक, कथङ्कारमेतद् भोज्य विभजेमहि?"

वृक उवाच—"पशुत्रयस्यैतस्य शकलीकरण तावन्नावश्यकं लेशतोऽपि। भवद्भिर्गर्दभो गृह्यता खिखिश्च शशकमशिष्यति, अहन्तु हरिणग्रहणेनैव तुष्येयम्।"

प्रस्ताव त सश्रुत्य सक्ष्वेडमाक्रोशन् केसरी पादप्रहारेण तत्परा-मर्शपारितोषिकमिव प्रदित्सन् तन्मूर्धानममृद्नात्। तत स बहु-मायमभिमुखीभूय समभ्यधात्—"कस्ते प्रस्ताव, मद्भ्रातर्भूरिमाय?"

"श्रीमन्, विस्पष्ट एवैष विषय", साष्टाङ्गप्रणिपात सोऽभ्य-भाषत। "कल्यवर्तस्तावच्चत्रीवता क्रियताम्, सारङ्ग सायमाशाय सुरक्ष्यताम्, मृदुरोमा च विघसद्वयमध्ये समद्यतामुपाहारतया।"

"साधु भो साधु", भूयिष्ठाशभाग् भविष्यन् पशुरिपुस्तुष्टो बभाषे, "को नु किलाऽकरोत् त्वा कृतिन कीर्तयितुमेवमात्मिका विवेकौचित्योपचिता वार्ता?'

"ईहामृग" इति निपुणमभणत् बहुमाय।

कुतो न्वसौ तथाऽकथयत् ? अपि स्वमत यथातथमभिधित्सुः स तथा समालपत् ? नैव। तत्कि स सत्यमेव सिंह प्रसादयितुकाम ? न खलु, न खलु। स तु भयादेव तथाभ्यधात्। तेन च समर्हतितरा स निःसन्देहमस्मत्सहानुभूतिम्। तथापि स्वीकर्तव्यमेवेदं यदसौ न यथार्थमकथयत्। चातुर्यादेव तथोदचरत् स चतुर। पञ्चास्योऽपि च तद्वचो मासलिप्सयैव समभ्यनन्दन्न तु सत्यप्रियतया।

★

'अबू अब्बास'नामकेन मुस्लिमलेखकेन केनापि यहूदीयपवित्रपत्तन'यरुशलम'शासकस्य सुलेमानस्य कीर्तिकथा कीर्तिता।

तस्य हि शासितु सभासदनमासनाना षट्शत्यलञ्चकार। तस्यास्त्रिशते मनीषिणो निषेदु शेषे च शतत्रये भूतपिशाचा ये किलाऽतिमानुषशक्त्या क्षितीशस्य साहाय्य समपादयन्।

परिषदुपवेशनेषु मानुषेश्वरस्य तस्य शब्दमात्रेण समुद्बभूवु विशाला पतत्रिण शतश। ते च स्वपतत्रै प्रविततै आ सम्मेलनसमाप्तेरनातप प्रासीसरन् षट्शतपीठोपविष्टेषु पारिषद्येषु। प्रत्यह प्रात साय नृपतिप्रेरणया प्रवात कोऽपि तीव्रवात समस्तमपि तत्प्रासाद समुत्तोल्य माससम्प्राप्य स्थल पलेनैव प्रापयामास येन हि स स्वशासनान्त स्थितसुदूरदेशानधिशासितुमैशिष्ट।

एतत्समतिरिक्त सुलेमान सुविस्मयावह सिंहासन किमपि मनसाऽप्यकल्प्य परिकल्पयामास। तद्धि तथा निर्ममे यथा तस्मिन्नासीने सति नृपतौ न तत्पुरत कोऽप्यसत्यमाशसितुमुत्सहते स्म।

गजदन्तमय गारुत्मतपद्मरागप्रभृतिरत्नराजिविराजित राजासन

परितस्तपनीयमया मणिमाणिक्यमुक्ताफलफलिता तालतरवश्चत्वारो व्यरच्यन्त। तेषा द्वयो शिखरे द्वौ कनककेकिनौ द्वयोश्च हिरण्मय-गृध्रौ समासिषाताम्। भद्रासनमुभयतोऽश्मगर्भस्तम्भयो र्मध्ये द्वौ स्वर्णसिहौ तस्थतु। पद्मरागमयफलस्तबकिता हिरण्मयगोस्तनी-लता तास्तालतरुस्कन्धान् पर्यवारयन्।

'इजराइल'जनपदस्य वृद्धजना सुलेमानस्याऽपसव्यत कार्त्तस्वरा-ऽऽसन्दीरध्यासत, पिशाचाश्च तस्य सव्यतो रूप्यपीठेषु समुपविविशु।

न्यायपरिषदि व्यवहारान् पश्यति विशाम्पतौ प्राकृतपुरुषा अपि तत्र प्रवेशमलभन्त। व्यवहारवेलायाञ्च रेखामात्रमपि सत्याद् व्यतियाति कस्मिश्चिदपि साक्षिणि किमपि कौतुकमिवाऽऽलोक्यत। नरेन्द्र-मृगेन्द्रादिसवलित तत्सिहासन सहसैवाऽनृतवक्तु र्मूर्द्धानि परित: परिबभ्राम। तत पर च सिहौ स्वपादौ पुरस्तात् पातयन्तौ पृथिवी पुच्छेन प्राहरतामास्फालयताञ्च गृध्रो मयूरावपि च स्वपक्षती।

तथा स्थिते साक्षी सत्रस्तो नोत्सेहेऽनृतालापसाहस समा-स्थातुम्।

समस्तमपि तद् वसुधाधिपस्य समधिकसौविध्यमसाधयत् समपाद-यच्च सुसाध्या व्यवहारस्थितिमित्यविवादास्पदम्। पर सततोप-तापि सत्यविसवादि च खलु भयम्।

काम कदाचित् तद् विवशयति पुरुष सत्य भाषितु यथा हि 'अबू अब्बास'कथायामस्यामाख्यातम्। तथापि न हि तेन स सत्यवादी सपद्यते, यत पलेनैव तत्प्रथमोक्तकथाया खिखिमिव त मिथ्याकथनेऽपि प्रवर्तयतीति प्रायो विलोक्यते पृथ्वीतले।

न नाम सत्यभाषण शिक्षितु सुलेमानसिहासनस्याश्चर्यमवश्य-माश्रेय शुद्धात्मन। सत्यस्य सिहासन ननु तस्य हृदयम्। अल-

मात्मशुद्धतैव त सत्याशसनाय प्रेरयितुम्। न हि सोऽध्यापकप्राड्-विवाकयोर्वा प्रभोर्वा भयेन सत्य सभाषते प्रत्युतैतस्य शुचिपुरुषो-चितत्वात्। सत्यप्रियो हि स प्रकृत्या।

सत्यप्रेम्ण खल्वय प्रभावो यत् स सर्वमपि भय पराभवति, भृशमभियातोऽपि चाभीलैर्यथाभूतमभिधत्ते।

*

आसीत् पुरा कोऽपि प्रतापशाली प्रभूतैश्वर्यराशिसमाश्रयो नरेशो विश्वामित्र इति विश्रुत। स हि प्रतिष्ठाया परमकाष्ठाऽऽश्रय-णाय निजराजन्यवर्णाद् वरीयास ब्राह्मणवर्ण प्रविविक्षुस्तपश्चरितु निरचैषीत्। तत्कृते स कर्मकलापमात्ययिकमशेषतोऽनुतिष्ठन् तीव्र-तपोज्वलित जीवितमत्यवाहयत्। तेन च 'सर्वथाऽप्यर्हति ब्रह्मपदवी प्रतिपत्तु महाराज' इति सननर्त गी रसनाग्ररङ्गे नरगणस्य। पर ब्राह्मणो वसिष्ठोऽन्यथैव मेने यतो हि स विवेद यन्नृपो विश्वा-मित्रो दर्पाद् ब्राह्मणत्वदम्भमात्रमाचरति, नासौ त्यागस्तस्य यथार्थ। तेन हि स त न ब्रह्मर्षिपदव्याऽभ्यनन्दत्।

तेन च रोषावेशविवशो विशाम्पतिर्वसिष्ठवशस्य सूनुशत विशास-यामास। तत्कृतेन दारकनिर्दलनेन दारुणदु खासिकादष्टोऽपि वसिष्ठो नाऽसत्य जातुचिदुच्चरिष्यामि इति निजनिश्चयान्न विचचाल। तत्समीक्ष्य स क्षितिशासकस्त सत्यशसकमपि विशसितु व्यवससौ।

अथैकदा प्रदोषे दुष्कृतमिदमाचरितु स तत्पर्णशाला प्रति प्रातिष्ठत। तद्द्वारमाराद्रुपगतश्च त भार्यया सह सभाषमाण निशम्य श्रुतिमुपगते स्वीयव्यपदेशे तत्रैव विरराम। शुश्राव च तदा स्वविषये शुद्धशान्ता क्षमातिशयशालिनीञ्च वाचम्। तया

द्रवीभूतहृदयोऽनुतापतप्तश्च स शस्त्रं निरस्य प्रविश्य चान्तः ऋषेश्चरणयोः निपपात।

महीश्वरस्य मनसस्तादृशीं दशां निध्यायन् ब्रह्मश्रेष्ठो वसिष्ठस्तं 'ब्रह्मर्षि'पदेन संबोध्य सस्नेहं समभ्यनन्दीत्।

"कुतस्तावन्न सत्कृतमितः पूर्वं मत्तपस्तत्रभवता?" इति सप्रश्रयं पर्यपृच्छत् पृथिवीशः।

"यत्पूर्वं भवान् भुजबलमदेन ब्रह्मपदलब्धयेऽन्वरौत्सीत्। सम्प्रति तु समुपात्तविप्रतीसारः परमार्थतो ब्राह्मणवृत्तिं बिभर्तितमाम्" इति ब्रह्मसुतः प्रत्यब्रवीत्।

स हि विद्वेषशून्यं निर्विशङ्कञ्च सत्यम् आख्यातुमज्ञासीत्।

★

स्वैरमापतन्तीष्वपि विपत्सु सत्यभाषणमीदृशमहो शोभनमिति नाभाति किं वः?

इत्थं विपदः प्रतियुध्यमानानां च पुंसामापाताऽशुभान्यपि भद्रतराणि परिणमन्ति दृश्यन्ते जगति। न जात्वनृतमन्ततो विजयते, काममास्तामादितस्तस्योदयः स्वल्पसमयम्। अपि च, सत्यमेव सर्वोत्तमा नीतिरिति सिध्यति प्रसङ्गेषु भूयःसु।

पूर्वं कदाचित् प्रभाते दिल्लीपतिः सत्पात्रेभ्यः पदवीः प्रीतिदानानि च प्रदातुं सभां समेलयाम्बभूव। समाप्तकल्पे च तस्मिन्नुत्सवे समाहूतेषु सभ्येषु सैयद अहमदाह्वयो युवा नायातोऽद्य यावदिति स निरूपयामास।

ततश्च शिबिकायां सुमहासौधान्तःसंवहनसहायिकायां समासितुं सिंहासनात् समुत्थिते महीपे स युवा सरभसमुपासर्पत्।

"वेलातिक्रम कृतस्त्वत्कुमारेण", सैयदस्य पितर सुहृद महीन्द्र समुदाहरत्। अप्राक्षीच्च परुषेक्षणपातपूर्व त तरुणम् "किमिति चिरायित त्वया" इति।

"महाराज, अद्याहमतिचिरेण शय्याममुचम्" इति सत्यमवदत् सैयद।

सभासदस्तु तन्निशम्य भयार्दितस्वान्ता विस्मयविकसिताक्षाश्च समवलुलोकिरे युवकम्। कथमिव प्रगल्भमय प्रतिपद्यते स्वापराध नृपते पुरस्तात्! अपि नाशकदेष कर्तु कमपि व्यपदेशम्? किमिवैनेन जडवज्जल्पित जनेन!

परन्तु विपरीतमेव परिणत सर्वम्। पल प्रत्यवमृश्य प्रशशस पृथिवीश्वरस्तस्य सत्यभाषित्वम्। तदनु च स तस्मै मुक्तामाला मूर्धरत्नञ्च सत्कृतिसङ्केतस्वरूप प्रायच्छन्।

धरेन्द्रो वा स्यात् निर्धनेन्द्रो वा सर्वस्य सम्मुख सत्य भाषितुमभ्यस्त सत्यप्रेमी सैयद सत्यस्यैव कृतेनैव पुरस्कृत।

*

ध्रुवमिदमवधेय यन्निर्विशङ्क सत्यमालपितु सरलतमा सरणि. इयमेव यदन्यस्मात् निगूहनीय किमपि कर्म क्रियेतैव न। तत्कृते च सर्वदा स्मर्तव्यमेतत्स्वान्तरे यत् अन्तर्यामिन सन्निधौ स्म इति।

सत्यव्यवहारनिघ्न हि सत्यभाषणम्। स एव सत्यवादी यः खलु सर्वथा छलविरहित वदति स्वव्यवहारे च दम्भ दूरत परिहरति।

अस्ति 'अमरोहा'नगरे "कागजी" नाम कश्चिन्मृत्पात्रविशेषो निष्पाद्यते। तत्रत्या शिल्पिनस्तस्मिन् पात्रे रूप्यरसेन सुचारुचित्राणि रचयन्ति। अतिभव्यमपि तत्तथा लघु भङ्गुरञ्च भवति

यथाऽल्पीयसाऽपि प्रयोगेण झगिति भज्यते। भोजनाद्यर्थमुपयोगि प्रतीयमानमपि तन्नयनप्रीतिकरमेव केवलम्।

सन्ति खल्विह भूयास पुमासो ये "कागजी"पात्रेण सवदन्ति। आसेचनदर्शनास्ते केवलम्, किन्तु तेषु निकषनिवेशितमात्रेषु, तेषा मिथ्याबाह्याडम्बर सलक्ष्यते। न ते लवमप्यवलम्बनीया। न लेशतोऽपि विश्वसितव्या। दुर्वहो हि विश्वासनिर्वाहो दुर्बल-प्रकृतीना तेषाम्।

एवमनुश्रूयते पुरा किल कश्चिद् द्विज स्वतनुज केनापि विप-श्चिता विद्यामुपशिक्षयितु विश्वनाथपुरीं प्रैषयत्। द्वादशवर्षानन्तर स्वग्राम प्रत्यागते तस्मिन् कुमारे तद्ग्रामवासिनो बहव 'सवृत्तोऽयं साम्प्रत परमसूरि' इति मनसि कृत्वा तद्दर्शनोत्सुकास्तन्निशान्तमुपसन्ना। तत्र च ते सस्कृतपुस्तक किमपि तत्सम्मुखमुपस्थाप्य सम्प्रार्थयन्— "पूज्य पण्डितप्रवर, ज्ञानमेतद्गत ज्ञापयत्वस्मान् मान्य" इति।

तरुणस्तु निर्निमेष निशामयन्नपि तत्पुस्तक न तस्य पदमेकमप्य-वबोद्धु प्रभुरभूत्। वाराणस्या हि स वर्णमालामन्तरेण लेशमात्र-मपि नाशिक्षत। वर्णाश्च तत्र कृष्णफलके स्फीताकारतया लिख्य-मानास्तेन प्रत्यह प्रैक्ष्यन्तेति ते तस्य मस्तिष्के क्रमश पदमकार्षु।

तस्मात् स तद्ग्रन्थनिविष्टदृष्टि शान्तमुपविष्ट शीघ्रमेव वाष्पपटलपूरपरिप्लुतनेत्र पर्यदृश्यत।

तदभिनिचाय्य चाभ्यागता अवोचन्, "पण्डितप्रकाण्ड, पुस्तक-स्थेन केनाप्यर्थेन द्रवीभूतमिव नु तत्रभवतो हृदयम्। तत्प्रसाद-नीया वयमिमे तदुपन्यस्तार्थप्रतिपादनेन।"

पण्डित प्रत्यब्रवीत्—"वाराणस्या तावदिमान्यक्षराणि स्थूलानि आसन्नत्र तु तथा सूक्ष्माणि!" इति।

अपि नासीत् स पण्डित 'कागजी'पात्रप्रतिरूप ?

★

श्रूयते हि गङ्गातीरे गण्डशिलासु कश्चिदीहामृग प्रतिवसति स्म। एकदा हिमराशिनिष्यन्दात् त्रिदशापगा पूरोत्पीडेन पर्यपूर्यत नितराम्। तेन च सा वृकावासमहाशिला परित. सलिलवेष्टिता अभवत्। अत एव तस्मिन्नहनि स ईहामृग स्वाहारमार्गणाय बहिर्गन्तु न शशाक। ततोऽसौ 'नाद्यास्ति किमप्यद्यम्' इति निरूप्य स्वात्मान सम्प्राह—"वर तावत्, पुण्यदिनमिदम्। तदहमद्योपवासमास्थास्यामि एतत्समाननिमित्तम्।"

इत्येव सप्रधार्य स महाप्रस्तरस्य तस्य कस्मिंश्चित् प्रान्ते समासीन पवित्र व्रतवासर निर्वर्तयितु स्वात्मानमतिसौम्यमिव सन्दर्शयामास।

तेनैव कालेन काचिद् वन्याऽजा जलप्रवाहस्योपरि प्रस्तरात्प्रस्तरमुत्पतन्ती महोपलमीहामृगेण भक्तिभावभरितेन समधिष्ठित समुपससर्प।

तामवलोक्य स सहसा समाक्रोशत्—"आ, उपनत मे किमप्यत्तुम्।" तथाभिधाय च स तस्यामवपतितोऽपि प्रतिहतप्रयत्नोऽभूत्। पुनरप्यवपतन् विफलतामवाप। अन्ते च सा बस्ता समुत्तीर्ण-तरस्वत्स्रोतास्तस्य दुरासदा सवृत्ता।

"साधु!" ईहामृगो मुहुरपि साधुस्वरूपमास्थाय समालपत्—"न हि चिकीर्षाम्यशुचिमात्मान व्रतवासरेऽस्मिन् बस्तामासमास्वाद्य। उपवासदिवसे मासम्! शान्त पापम्, शान्तं पापम्।"

कि वो मत वृकस्य तद्भक्तिभावस्य तद्व्रतनिष्ठायाश्च विषये? कच्चिदुपहसथ त मायाविनम्? किन्तु दृश्यन्तेऽनेकशोऽत्र पुरुषा ये खलु केवल तद्वृकवत् सत्यसेविन। ते हि स्वार्थसिद्धयर्थमुच्च-

विचारानुच्चारयन्ति वाचा, अशक्नुवन्तश्च प्रकाश दुष्कृत कर्तुं बक-वृत्त्या वर्तन्ते। अपि नाम कुर्वन्तोऽपि कैतव तादृक्प्रतारकाश्चिर स्थातु समर्था सत्यन्यायोपासकाना पुरन ?

★

हनुमतो वाहिन्या वानरभल्लूका भगवतो रामस्य तद्भ्रातु सौमित्रेश्च कृते राक्षसाधिपेन दशग्रीवेण सम सङग्राम समङ्गचकार्षु ।

तत्र हि समन्तात् सैनिकैरभिषेणित पिशिताशनेन्द्रस्तत्प्रहारेभ्य स्वात्मान परिपातुमप्रभुरभिचारशक्तिमशिश्रियत्। तन्मायाप्रभावेण च तत्क्षणमेव तमभितो दैत्यदलमध्ये च भूयासो रामभद्रा सौमित्रयश्च प्रादुबभूवु ! मिथ्यामायामयच्छायापुरुषेभ्यो नेतरे ते, पर प्लवगाऽच्छभल्लास्तु ता रामसौमित्रिमूर्ती सत्या मन्यमाना विस्मयस्तिमिता समराद् व्यरसिषु । कथमिवामी तदा सप्रहरेयुर्वर्षेयुश्च शैलशाखिन स्वप्रियसेनान्यो रामसौमित्र्यो ? ताश्च तथा चित्रलिखितानिव किङ्कर्त्तव्यविमूढाश्च निर्वर्ण्य रावणो निष्करुण स्मितमकार्षीत्। रामोपि च 'अनृतस्यैतस्य निरसनेन कपटस्य प्रकटनेन च सत्यजय साधयिष्यन्नह हर्षप्रकर्षमेष्यामि' इति विमृशन् मन्दमन्दमस्मयिष्ट। ततश्च प्रतापशालिशरासने स्वे शरमारोप्य स त शत्रुसैन्ये निचिक्षेप। मिथ्यामूर्तीस्ता निर्भिद्य निर्यात्येव तस्मिन् सायके ता वायौ व्यलीयन्त। एवञ्च विदिते सति वास्तविकसत्ये वायुसुतसैन्य भूयोऽपि भूयस्तरामुत्साहमभजत्।

सत्यवादिन यथार्थवचनान्यपि तन्नाराचवदाचरन्ति। प्रभवन्ति हि तान्यसत्य दम्भञ्च समुत्सारयितुम्।

★

एवमनुश्रूयते—पुराकाले दक्षिणापथे 'मालतीराज'नामा कोऽपि महाराजो मही शशास। तस्य हासो हि तदीयहृदयादानन्दनिर्भरान्निसर्गतो नि सरन् मालतीप्रसूनपरिमलेनेव पर्यपूरयत् किल दिग्दिगन्तान्। अथ चेदसावसति वास्तवप्रसादे हसितु प्रयस्यति तदा तस्य तत्फलमल्पतोऽपि नोत्पद्यते। प्रफुल्लस्वान्तस्य तु तस्य हास सुवासितप्रस्रवणमिव सोस्रवीति स्म।

तदेव हासस्यैतस्य महीयस्त्व कात्स्न्र्येनैतत्सत्यत्वे निहितमासीत्।

*

दुर्योधनस्य राजमन्दिरे राजवैभवयोग्य भोज्यजातमायोज्यते स्म। भोजनमञ्चाश्च रचितराजोचितोपचारा मरकतपद्मरागप्रत्युप्तै प्रोज्ज्वलवज्रजटितै रजत-जातरूपपात्रैरराजन्त। एकदा वासुदेवो दुर्योधनेन सधिवेलाया स्व-राजभवने भोजनार्थमभ्यर्थितोऽभूत्। पर स न जगाम तत्र। तस्मिन्नेव प्रदोषे स दरिद्रशूद्रस्य कस्यचित् निमन्त्रणमुररीकृत्य तन्निकेतन पवित्रमकरोत्। अतिसामान्यमासीत् तस्यान्न प्रतरा प्राकृतानि च पात्राणि। तथापि वासुदेवो विदन्नेव सर्व दुर्योधनस्य विघस व्युदस्य वृषलस्य ग्रास समाद्रियत यतो हि पारमार्थिकप्रीत्युपेतमासीत्तदर्पितमन्न वैभवाभिव्यञ्जनैकबीजश्च दुर्योधनस्य राजभोज।

*

मर्यादापुरुषोत्तमस्य श्रीरामस्य विषयेऽपि खल्वीदृशी कथाऽनुश्रूयते। स ह्येकदा कस्याश्चिन्निकृष्टवर्णाया शाकुनिक्याः शबर्या वेश्मनि प्राश्नात्। भोज्यान्तराऽभावेन सा केवल कतिपय-

फलान्येव समर्पयितुमपारयत् प्रथितप्रतापाय रामाय। पर सा स्वीय सर्वोत्तम वस्तु प्रीतिपरिप्लुतेनान्तरेण तस्मै समर्पयामास। तेन च पुलकिततनुरसौ 'सरलहृदयेन समर्पितस्योपहारस्यैतस्य स्मृति मसृतेर्नावसीदेत्' इत्याशसत। तत एव च समतीतेष्वपि पर सहस्रसवत्सरेष्वद्यावधि तत्कथा कीर्त्यते लोके।

*

आसीज्जलालो नाम कोऽप्युपदेशक प्राज्ञतल्लजो जनविश्रुतश्च। एकदा द्वौ तुरुष्कौ तदुपदेश शुश्रूषमाणौ प्राभृतपाणी तमुपासर्पताम्।

प्रतनुद्रव्यतया तयो प्रीतिदानमपि सामान्य मसूरमुष्टिमात्र-मेवासीत्। तेन च तत्त्वविदस्तस्य कतिचिदन्तेवासिन साधिक्षेप निचिक्षिपुस्तयोश्चक्षु। तन्निचाय्य जलालस्तान् प्रत्यभाषत—

"कदाचित् किमपि सुमहत् कार्यं निर्वोढु विपुलवित्त व्यपेक्षमाणो सिद्धो मुहम्मद स्वशिष्यान् स्वस्मै यावच्छक्यमैश्वर्यराशि विश्राण-यितु शशस। तथाऽभ्यर्थितेषु तेषु प्रभूत-प्राभृतभृतस्तद्भक्तर्षभा केचित् तमभ्युपेत्य स्वविभवस्यार्धमभिसप्राददुस्तस्मै, इतरे तृतीया-शम्। अबूबकर स्व स्वापतेय समस्तमपि तस्मै समर्पयामास। एव मुहम्मदो बहूनि शस्त्रास्त्राण्यश्वादीश्च समासीसदत्। अन्ते च तत्र दुर्गताऽङ्गना काचिदागत्य तस्मै खर्जूरत्रय गोधूमकान्दवञ्च स्वसर्वस्वभूत निवेदयामास। तत्समीक्ष्य विजहसुर्जना बहव। ईश्वरसदेशहरस्तु तान् सव्याहरत्—'ह्यो रात्रावह स्वप्नमेकमद्रा-क्षम्। तत्र हि स्वर्दूता हस्तयोस्तुला गृहीत्वा तस्या एकस्मिन् पार्श्वे श्रीमता सर्वेषामपि प्रदेशनानि परस्मिश्च तस्या नि स्वनार्या खर्जूरत्रितय पिष्टकञ्च निवेश्य तोलयन्त आसन्। तदात्वे च द्वावपि

पार्श्वौ तुल्यभारतया सतुलिताववस्थितौ' " इति।

एतद्विज्ञाप्य जलाल एवमुपसजहार—सत्यहृदयार्पित स्वल्पोऽप्युपहारो महार्घोपहारतुल्य ।

इत्येतत्कर्णे कृत्वा तुर्कौ परा प्रीतिमवापतु । तत परञ्च कोऽपि तत् स्वल्प सूपमुपहसितु नोत्सेहे।

एकदा कश्चिदपकृष्टवर्ण परिक्षीणपुरुष स्वपरिवारपोषणार्थमाहारमन्वेषयितु नि शेषमहर्वनमवजगाहे। परमितस्ततो दत्तदृष्टिरपि नाशकत् किमप्यवाप्तुम्। समागतेऽपि गोधूलिकाले स एकाकी कान्तारान्तरेव तस्थौ। तथा सति स क्षुत्तृषार्तो निष्फलपुरुषार्थ-परिश्रान्तश्च पतत्रिनिलयप्राप्तिप्रत्याशया कञ्चिद् बिल्ववृक्षमारोहद् यस्य पत्राणि त्रिशूलाकृतीनि कृतिभिर्महतो देवस्य शिवस्य पूजायामुपयुज्यन्ते। किन्तु तत्रापि कमपि कुलाय नालोकयत्। ततोऽसौ सहसैव त तदुपनीतमन्न च प्रतिपालयत पुत्रकलत्रस्य सस्मरन् रोदितुमारब्ध।

अहो उत्कृष्टतराणि निरतिशयशक्तिशालीनि ननु करुणाश्रूणि स्वशोकविमुक्ताश्रुभ्य !

तथा हि दयाद्रवार्द्रहृदयस्य तस्य व्याधस्य वाष्पबिन्दवो बिल्वपत्रेषु न्यपप्तन्। अथ च तदस्रभरस्रस्त स पत्रसमूह पादपस्कन्धसविधे वसुधाया सुनिवेशितस्य शिवलिङ्गस्योपरि निपतित । तत्समकालमेव स लुब्धक केनाप्याशीविषेण दष्ट. शमननिशान्ताऽऽवेशिको बभूव। तदनु द्रुतमेव दण्डधरदूतास्तस्यात्मान देवलोक नीत्वा शङ्करस्य सम्मुखमुपस्थापयामासु ।

त समीक्ष्य स्वर्गनिवासिनो युगपत् समवदन्—"नेहाऽस्यात्मनोऽर्थे किमपि स्थानमस्ति। जघन्यजातीयोऽय जन । अवधीरितवानय

विधिव्रतानि, अखादीदमेध्यखाद्यानि न न्यवेदयच्च देवताभ्यो नैवेद्यानि नित्यनिवेद्यानीति।"

विरतवचसि देववृन्दे महादेव समवदत्—"मह्यमेष महाफल-पत्राण्युपहार्यकार्षीद् व्यश्राणयच्च विशेषत स्वान्तरश्रूणि। न नाम च नीचजातिर्ज्ञायते निर्व्याजात्मना जनानाम्।" इत्येव समुद्गीर्य स त स्वर्गलोके समङ्गीकृतवान्।

*

प्रतिदेश प्रतियुगञ्च पुमासस्तद्देवताश्च सत्यसमानिन सर्वेष्वपि विषयेषु सत्यसाग्ल्यस्नेहिनश्चासन्। सम्यङ निरूपितमेतदस्माभिः प्रसङ्गैरेतैरुपर्युपन्यस्तै ।

मानुष्यशत्रुर्हि स योऽसत्यवर्तन ।

दर्शन ज्योतिष गणित रसायन पदार्थविज्ञानमित्येतानि मानुषोपज्ञानि शास्त्राणि सत्यमेवानुसदधते। न च केवल महिष्ठा अपि तु लघिष्ठा अपि विषया ननु सत्यसव्यपेक्षा ।

शिशव, मा स्म प्रतिपालयध्व वय स्थता सत्यभाषणमभ्यसितुम्। न किल कोऽप्यकालो नाम सत्यभाषणाभ्यसनारम्भस्य। दृढसत्यनिष्ठा च ऋते सुचिराभ्यासान्न साध्या।

सत्य भाषितुमनसोऽपि पुसस्तद्भाषण काले काले प्रकाम दुष्कर सपद्यते यतस्तदर्थमादितोऽस्माभिस्सत्यस्य स्वरूपमवबोध्यमनुसन्धेय च। तच्च न सर्वदा सुकरम्।

श्रूयते हि वाराणसीश्वरस्य चत्वारस्तरुणतनया आसन्। एकदा तेषामेकैक स्वपितु सूत समालपत्—"किंशुकद्रुम दिदृक्षेऽहम्" इति।

"दर्शयिष्यामि ते" इति प्रत्येक प्रतिश्रुत्य सव्येष्टा तेषु ज्येष्ठ विहाराय वनमनैषीत्।

विपिन प्राप्य स नृपतिपुत्राय पलाश पर्यदर्शयत्। निष्पत्र-पुष्पपल्लवत्वात् पलाशस्य तस्मिन्नृतौ स नृपसूनुर्नि सत्त्वनीरसस्थाणु-मेव सलक्षयामास।

अथ कतिपयसप्ताहसमनन्तर द्वितीयस्तनय स्यन्दनेन विहर्तुं वन गत पलाश पलाशै परिशालमान समपश्यत्।

ततो वहत्सु वासरेषु कालान्तरे तृतीयस्य वार समायात। स हि त पुष्पपटलै पाटलवर्णं निर्वर्णयाम्बभूव।

अन्ते च तुरीय पुत्रस्त तरु न्यरूपयत्। तदानीं स पादप पचेलिमफलभारावनतोऽवर्तत।

अथ कदाचित् सङ्गतेषु चतुर्ष्वपि भ्रातृष्वन्यतमोऽनुयुङ्क्ते—"अयि भो कीदृशो नु किंशुक ?"

वर्षिष्ठो ब्रूते—"रुण्डद्रुमप्रकाण्ड इव।"

द्वितीयो वदति—"रम्भेव प्रविततपत्र।"

तृतीय उत्तरति—"सेवतीप्रसूनस्तबक इव।"

चतुर्थश्चष्टे—"स तु फलिनबर्बुर इव प्रतिभाति।"

परस्परवैमत्यञ्च तत् परिहर्तुमपारयन्तस्ते सर्वेऽपि सभूय सप्रधारणाय स्वपितरमुपासर्पन्। 'कथमनुपूर्वशस्ते पलाशमपश्यन्' इति निशम्य सस्मिताननोऽसौ तान् समाशशस—

"चत्वारोऽपि यूय यत्कथयथ तथैव तत्। पर विस्मृतमिद युष्माभिर्यत् स द्रुम सर्वेष्वपि ऋतुषु समानरूपो नैव दृश्यते" इति।

तेषु प्रत्येक यथातथ कथयन्नपि परज्ञाताऽनभिज्ञ आसीत्।

एवमेव प्रायश पुमास सत्यस्य स्वल्पामेव कलामाकलयन्तोऽपि

तत्सकल किल विद्मो वयमित्यभिमन्यन्ते। तदेव च तेषा मिथ्या-मतेर्मूलम्।

अथ चेत् ते सत्यस्य स्वरूपनिरूपणाय बाल्यात् प्रभृति तस्मिन् बद्धमनस सततमधिकाधिकञ्च तदभ्यास विदध्युस्तदय तदीयो मति-विभ्रम सुतमामल्पीयस्त्वमापद्येत।

*

प्रालेयाद्रि-प्रस्थप्रदेशमधिष्ठितस्य कुमायूपत्तनस्य नृपतिरेकदा 'अलमोडा'पर्वतोपत्यकामक्षुण्णविपिनपरिवृता पापर्द्धये प्रययौ।

तत्र स्तम्बमध्यान्निष्क्रामन्त कमपि शशक निशाम्य समनुससार तमसौ। किन्त्वतर्कितमेव स रोमकर्णो व्याघ्ररूपेण परिणतो न-चिराय नयनविषयमतिचक्राम।

अद्भुतेन तेन स्तम्भितो भूपति स्वभवनेऽनुभविना धीविभा-सिना सभा सम्मेलयामास समन्वयुक्त च तान् तस्याभिप्रायम्।

तत्परिभाव्य ते प्रत्यालपन्—"द्वीप्यन्तर्धानपदे देवेन नवपुर निर्मापयितव्यमित्येव तात्पर्यं तस्याद्भुतस्य, यत पुसा सुबृहत्समुदाग्रै-रधिष्ठास्यमानात् प्रदेशादेव पलायन्ते शार्दूला" इति।

ततश्च नव पुर प्रकल्पयितु व्यापारिता कर्मकरा धरित्र्या दृढता निर्धारयितु तस्या स्थूलाऽऽयसशलाका न्यखानिषु। तदा-नीञ्चाकस्मात् प्रतनु पस्पन्दे वसुमती।

तत्समीक्ष्य सूरय समब्रुवन्—"विरम्यताम्! विरम्यताम्!! रे रे कर्मकरा!!! शलाकाऽश्रिर्विश्वम्भराभारसहस्य शेषस्य वपुषि प्रविष्टा। अतो न निर्मातव्यमत्र पुर साम्प्रतम्।"

अथ च काश्यपीगर्भान्निष्कासितोऽश्मसारकीलक किल कुण्डलीश-शोणितशोणितोऽदृश्यत।

तन्निरूप्य नृपतिरब्रूत—"अहो अमङ्गलमिदम्। तथापि कृत-सकल्पा वय निर्मातु पत्तनमिति तत्तु सम्प्रति प्रकल्पनीयमेव।"

"पुरेऽस्मिन् काऽपि रौद्री विपदापतिष्यति नाशमेष्यति चाशु विश्पतेर्वंश" इत्यभाषन्त विपश्चितोऽप्युपजातरोषा ।

पर नितरामुर्वरा वारिबहुला च ववृते प्रत्यन्तपर्वतोपान्तर्वातिनी सोर्वी। अस्ति च आ षट्शतसवत्सरेभ्योऽलमोडापुर तस्यामवस्थितम्। तत्परित प्रसृता वप्राश्च प्रशस्ता शस्यसपद प्रसुवते।

इत्थ शेमुषीजुषामपि तेषा भविष्यवाणी मृषाभाषितमसिध्यत्। आसन् हि ते शुद्धाशया स्ववचसामाप्तत्वेऽनुत्पन्नसशयाश्च। तदपि पतन्त्येव प्रायश पुरुषा भ्रान्तिष्वीदृशीषु सभावयन्ति च तानन्धविश्वासानपि परमार्थान्।

शिशव, मूढविश्वाससकुल· किलैष ससार। तदयमेवात्र सर्वसुलभ. सत्तमश्च सत्यानुसन्धानविधिर्यन्मनोवाक्कायकर्मभि सर्वदा सत्यव्रत सेवेमहि सपुष्येम च दिवानिशमुत्तरोत्तरञ्च सत्यनिष्ठाम्, यत सर्वेष्वर्थेषु परप्रतारणा परिहृत्यैव पार्यमस्माभिरभ्यसितु भूयस्तरामन्यै. स्वात्मनोऽप्रतारणम्।



९

# यथार्थनिर्णयः

गृह्यता काचिद् ऋजुतमा यष्टिर्निमज्ज्यताञ्च तदर्धं जलमध्ये। भास्यति हि वोऽसौ भुग्ना मध्यभागे। आरोपमात्र पुनस्तस्यास्तद् रूपम्। वस्तुवृत्तेनैव सा वक्रा सवृत्तेति वो धारणा भ्रममात्रम्, यतो हि सा यष्टि पुष्करान्निष्कासितमात्रैव विलोकयिष्यते युष्माभिर्यथापूर्वमवक्रैवेति।

एतद्विपरीतञ्च, व्याकुञ्चितमध्यभागाऽपि काचिद् यष्टि कोणविशेषेण कुशलतया सलिले निवेशिताऽतिशयसरला भासितुमर्हति। शक्या खलु प्रायश पुरुषा अप्युपमातु यष्टिभिरीदृशीभि। तथा हि—केचित् तावद्वस्तुत सत्प्रकृतयोऽप्यसम्यगालोक्यमानास्तथा न प्रतीयन्ते। अपरे पुन समये समये तथा मिथ्यारूपमभिनयन्ति यथा खल्वन्तर्दम्भिनोऽपि ऋजुप्रकृतयो विभासन्ते। तस्मादापातप्रतीयमानमेव रूप न प्रत्येतव्यम्, परिहार्यञ्च कस्यापि विषये निर्विवेक स्वमतनिर्धारणम्।

अथैकदा भारतवर्षस्य कस्मिंश्चिद् ग्रामे भैक्षचर्यां चरत कस्यापि साधो नयनविषयता प्राप्त एकस्मिन् शाद्वले कश्चन मेष। स हि साधुमालोक्य कोपाकुलितस्तमवस्कन्त्तु सन्नह्यमानो मूर्धानमवनमय्य कतिचित्पदान्यपससार।

तेन तथाऽनुष्ठिते सति स धर्मात्मा सप्रधारितवान्—"अहो, सुशील पेशलश्चाय पशु ! पुण्यवाञ्जनोऽहमिति विजानन् माम-

भिवादयितुमेवाय मत्पुरत स्वमूर्धानमवनमयति।" इत्येव परिभावयन्नेव स उरभ्रेण तेन समभिद्रुत तन्मूर्ध्नोऽभिघातेन एकेनैव प्रलुठचन् पृथिव्या निपपात।

तथा चाहु—उपनयति हि दुर्दशामपात्राणा प्रश्रयातिशयस्तद्विश्रम्भश्च पुरुषम्। यत्सत्य केचिज्जना 'ला फोन्तैन'-महोदयोपवर्णितकथाया वृकस्यानुकुर्वन्ति य हि मेषपालवेषपरिवेष्टितत्वान्मेषा भ्रान्त्या स्वभर्तार व्यभावयन्त। अपरे पुनस्तेन रासभेन सन्निभा भवन्ति यश्चित्रकायचर्मावृतकायो विकरालो व्यलोक्यत।

★

यथा च पुरुष परेषा केवल बाह्यरूप प्रतियन् भ्रान्तिमुपयाति तथैव स प्रायशो दोषैकदृष्टि तेषा विषयेऽविमर्शपुरस्सर स्वमतनिर्णयेऽपि सप्रवर्तते।

श्रूयते हि—पूर्वं कदाचिद् 'इस्माइल सफवी'र्नाम वनायुदेशशासिता खुरासानस्य राज्य निर्जित्य निजराजधानी प्रत्यावव्रजति स्म। मध्येमार्गं 'हातिफी'नामकस्य कवेर्निकेताऽन्तिकमुपेतोऽसौ तद्दर्शनार्थमत्यर्थमुदकण्ठत। तस्य लोकविश्रुतकवे' सन्निकर्षे समुत्सुकतया तत्सदनद्वारोपसर्पणविलम्बमप्यसहमान स तद्गृहाङ्गणवरणाद् बहिर्लम्बमानशाखस्य कस्यापि शाखिन शाखा समाश्रित्य तस्या दोलायमानो गृहसाल समुल्लङ्घ्य तस्य सूरेर्निष्कुटे समवततार।

यदि कश्चिदेवमेकपद एव प्रविशेद् वो गृह तद् यूय किं चिन्तयिष्यथ? 'पाटच्चरोऽयम्' इति विचार्य तस्य तदुचितमेवोपचारमाचरिष्यथ इति निश्चितम्।

किन्तु हातिफीमहोदय प्रकृत्याऽनपाचीनचित्तवृत्तिर्वृत्तस्य बाह्य-

रूपेण तत्क्षणोद्भूतप्रथमभावनयैव न किमपि संप्रधारयाञ्चकार। युक्तञ्च तस्यैतत्। स ह्यभ्यागतं तमकस्मात् समागतं स्वागतगिरा समभ्यनन्दत्, आसनदानादिना चोपचारेण सम्यगुपाचरत्। अथ कालक्रमेण स तस्य स्वसमरकर्मकीर्त्तनकुतूहलिनोऽवदानान्यधिकृत्य काश्चिन्नवकविताश्चकार।

*

सूक्तमिदमभियुक्तैः—सुकरं परच्छिद्रान्वेषणमिति। न च खलु न प्रथन्ते प्रत्येकमपि पुरुषे केचन दोषा ये तदपेक्षया प्रतिवेशिनश्चक्षुषोः क्षिप्रतरमापतन्ति। अतो यदि वयमन्येषां विषये यथाशक्ति न्यायशीलतया निर्णिनीषेम तदस्माभिस्तेषां सर्वोत्कृष्टगुणेष्वेव दृष्टिर्विधेया। तथा च लौकिकानामाभाणकः—"सुहृद्वो यदि काणः स्यात्तस्य वक्त्रं न वीक्ष्यताम्।"

युष्माकं ये सहाध्यायिनः स्थूलधियो दीर्घसूत्राश्च प्रतिभासन्ते, कदाचित्त एव स्ववर्गे समुद्योगितमाः स्युः। ये च वः शिक्षका अनुशासनप्रियाः परुषप्रकृतयश्च प्रतीयन्ते कदाचित्त एव युष्मासु भृशं स्निह्यन्तु युष्माकमुन्नतिं चोशन्तु नाम। यो वा सुहृद् वः समये समये सुतरामभद्र उद्वेगकृद्वा प्रतिभाति स एवान्ततः कदाचिद् वो हिततमः सुहृद् भवेत्।

सन्ति किलात्र नैके नरो यान् वयं पापकृतः इति कल्पयन्तो नानुकम्पामहे, कञ्चिद् वहन्ति तेऽपि स्वान्तःकरणे निगूढं स्थूलदृगगोचरं किमपि वैशिष्टचम्।

पुरा किल 'आगोबीओ'नगरोपकण्ठेषु कश्चिद् बृहत्कायो वृको विपुलमुपप्लवते स्म। तस्मात् परित्रस्ताः पुमांसः पुरस्य परिसरेषु

पदमर्पयितुमपि नापारयन्त। स हि पशून् पुरुषाश्चानेकशो व्यापादयामास।

अथैकदा 'फ्रास्वा'-समाह्वय साधुस्तदतिरौद्र सत्त्व पर्यवस्थातु मतिमातस्थौ। तन्मनसिकृत्य स सुमहता जनौघेनाऽनुगतो नगरान्निरगात्। वनसमीपे समुपेतमात्रमेव त सन्तमभिसपपात स वृको व्यात्तवक्त्र, किन्तु तत्कालमेव तत्कृतेन केनापि सौम्यनिर्देशेन प्रशमितामर्ष स मेषशिशुरिव तच्चरणाभ्याशे निषसाद।

एव सति सत्प्रवर फ्रास्वास्त समुवाच, "भद्र वृक, प्रचुरमपचारमाचरितवास्त्व पुरस्यैतस्य। तेन च आततायीव वधदण्डम् अर्हसि त्वम्। जुगुप्सते हि सर्वोऽपि जनस्त्वत्त.। तस्मात् त्वयि 'आगोबीओ'नगरनिवासिषु मद्वयस्येषु च समुत्पद्यमान सौहृद हि मे सुप्रीतये स्यात्।"

एतदाकर्ण्य वृको विनयावनत. स्वबालधिं विधवितुमारब्ध।

फ्रास्वा पुनरपि प्राह—"भ्रातरीहामृग, 'त्वमेतै सह शान्त्या निवस्तु स्वीकुरुषे चेत् एतेऽपि त्वयि साधु वत्स्यन्ति प्रदास्यन्ति च ते प्रतिदिन पर्याप्तखाद्यम्' इति प्रतिशृणोमि ते। कच्चित् प्रतिपद्यसे त्वमपि नाहमित पर कमप्यपायमेषामापादयिष्यामीति?"

ततस्तु स नितरा नतमस्तक सन् स्वीयमपसव्यपाद साधोर्हस्ते न्यस्तवान्। इत्थ च द्वावपि तौ परस्पर बद्धसौहार्दौ अभवताम्।

अथ फ्रास्वास्तमीहामृगम् 'आगोबीओ'नगरस्य निगम गमयाम्बभूव। तत्र चासौ पौरजनाग्रत पुनरुज्जगार सद्गिरस्ता अचिरोद्गीर्णा ईहामृगाय। वृकोऽपि 'सम्यग् व्यवहर्तास्म्यहमित प्रभृति' इत्यभिव्यञ्जयन्निव प्रतिज्ञा भूयोऽपि स्वपाद तस्य पुण्यभाग्जनस्य पाणौ न्यदधात्।

तद्दिवसादारभ्य स वत्सरद्वय तत्पुरमधिवसन् कस्यापि किमप्यहित नावहत्। पुरवासिनोऽपि प्रतिवासर तस्मै विघस सप्रापयामासु। उपरते च तस्मिन् सर्वेऽप्युन्मनायिता बभूवु।

आपातमारात्मकेऽपि तस्मिन् वृके किल काऽपि सद्वृत्तिरासीत्। ताञ्च न कोऽपि तावदनुभवितु प्रबभूव यावत् फ्रास्वास्त बन्धुपदेन न समबूबुधत्।

अत्रेदमवधेयम्—वृक किलैतत्कथाया प्रतिनिधिरपराधिना विप्रकुत्सास्पदाना पुसाम्। पर, प्रथन्ते हि तादृशे आपाततोऽप्रत्युद्धारेऽप्यपराधिनि भद्रभावप्ररोहा। ते च प्रेमलवप्रभावादभिवर्धितु प्रभवन्तीति प्रतिपाद्यते प्रसङ्गेनैतेन।

नितान्तजीर्णशीर्णोऽपि कश्चिदीदृक् काष्ठफलको नेह लक्ष्येत यस्मिन् कुशलस्त्वष्टा काश्चित् प्रशस्ताशान् न पश्येत्। कुशिल्पी तावदविद्यावशात्त सकलमपि फलक सावहेलमपहास्यति। सुविदग्धस्तक्षा तु समादाय तम् अपकृष्य च घुणजग्धमश सावधान समीकरिष्यति शेषम्। तरुस्कन्धाना ग्रन्थिलतमावयवेषु च नितान्तसहृतेष्वसावेकान्तमार्काषिका प्रतिकृतीरुत्करिष्यति।

*

रौद्र खलु 'गियाना'प्रदेश, यूरोपीयानामत्यन्तापायकरी च तस्य प्रकृति। अत एव तत्र दण्डितानामपराधिनां निर्वासिताना वा पुसां कृते कारावासा प्रकल्पिता सन्ति। कतिपयवर्षपूर्वं तत्र कोऽपि बलाधिकृत श्रमेण दण्डप्रतिकारिण बन्दिवर्गं प्रवहणेन 'केन'-नामकं नगर नयमान., अभितीरमुत्पतत्सु तरङ्गेषु, दैवात् पोताशयस्य पाथसि सपपात।

अय पत्तनोत्सग किल वेलाऽवसाने तथा सिकताभि सपूर्यते यथा तत्र पोतोऽवस्थापयितुमपि न पार्यते। वेलाया पुन परिबृहितेन पूरेण सह प्रवहन्तो बहवोऽवहारा अवरुन्धते सर्वतोऽपि रोध ।

प्रवाहपतित स पृतनाऽध्यक्षो ह्यविदिततरणविद्य प्राणविपत्तौ परिग्रस्त । 'कोऽपि घस्मरो ग्राहस्त ग्रसिष्यते' इति प्रतिपल परिवर्धमानायाञ्च भीतौ प्रग्रहेषु तेषु कोऽपि विना परप्रेरणा पयसि झम्पाम् अदात्। स हि त गृहीत्वा पृष्ठे धारयन् भूयसा प्रयासेन तमत्रास्त ।

स परित्राता तावदपराधीति प्रथितोऽभूत्। ये पुनस्त बन्दिवेश सज्ञासूचकसङ्ख्यासमङ्कितमयशस्करपट्टविशेषशालिन पथा प्रयान्त प्रायशोऽपश्यस्ते हि परिभवपुरस्सर तस्मात्पराङमुखा स्यु, किं बहुना, ते तु त प्रेक्षापातस्याऽप्यपात्र प्रियवचसोऽप्यनास्पदञ्च सभावयेयु । पर तेषा स निर्णयो न स्थाने। यतो हि वस्तुत. सौहार्दद्रवरसार्द्रमासीत् तस्याऽप्यन्तरम्। विद्यमानेऽपि चाऽऽदिनवसमुदाये स समुदारहृदयोऽभूत्। स्वकर्त्तव्यवशात्तस्मिन् सर्वदैव निर्दय व्यवहरतेऽधिकारिणेऽपि स स्वात्मन प्राणान् तृणायापि न मेने।

कस्यापि पुसो बहि प्रतिभासमानरूपेण तद्विषये स्वमत समामनन्तो वय वितथविचारैरत्यर्थं वञ्चयिष्यामहे इत्यपश्चिम वचो विपश्चिदपश्चिमानाम्। निदर्शयति चैतद् वक्ष्यमाणदृष्टान्तो मानुषाणामाधर्षितानाम्।

एवमनुश्रूयते—कदाचिद् द्वौ बन्दिनौ बन्धनादुद्धृतौ 'गियाना'ऽन्तर्गते समुत्तुङ्गे 'मारोनी'प्रदेशे रुक्माऽऽकरखननाधिकृतेन केनापि निजानुजीवितया नियोजितौ। तयोर्बद्धविश्वास स बहून् सवत्सरान् सैकतवर्तिरासायनिकद्रव्यक्रियाप्रसूतम् असस्कृतकार्तस्वरं

कनकसिकता च विपण्या विक्रेतु तत्करयो समर्पयन्नास्त। तावेव च ते (कार्तस्वरकनकसिकते) विपणितु तपनीयपण्यवीथिमुपानये-ताम्। सा पण्यवीथिश्च समीपतमाऽपि पयस्विन्या प्लवेन व्रजता पुसा समासन्नैस्त्रिशैर्दिवसैरासाद्यते स्म।

एकदा तु द्वावपि तौ प्राप्तनिस्तारौ अपराधिनौ पलायितुमव-धारितवन्तौ यतो हि तादृशो दण्डभागिनो दण्डभोगानन्तरमपि स्व-सद्म प्रति सनिर्वर्तितु स्वतन्त्रा नासते। प्रायशस्त आ परिशेषायुष-स्तत्रैव 'गियाना'-प्रदेशे प्रायश्चित्तालयानाश्रयितु विवशीक्रियन्ते। स प्रदेशस्तु श्यान सस्यशून्यो विश्वतो निबिडारण्यवेष्टितो निषद्वर-दूषितश्च। अत एव च बहूनब्दास्तत्र दण्डावधि समाप्य निर्मुक्त-बन्धना अपि बन्दिन पुनरपि बलादवरुद्धा क्षुत्क्षामा ज्वरजर्जरिता-श्चाजस्र जीवितसशयभाजो भवन्ति। तस्माच्च तेषामनेके लब्धाव-काशा तत पलायन्ते।

तथैव कार्तस्वरखनेराकरिकस्य तस्य तौ सेवकावपि स्वामिसम-र्पितप्लवेन प्राप्तावसरौ द्वीपवतीपारवर्तिन 'हॉलेण्ड'देशोपनिवेश प्रति धावितु धियमधत्ताम्।

पर पलायनात्पूर्वं तौ स्वामिन सर्वमपि सुवर्णं कस्मिंश्चित् सुरक्षितस्थाने समस्थापयतामनन्तरञ्च तस्मै पत्र सप्रेष्य तत्स्थल-सङ्केतमकुरुताम्।

पत्रे तावलिखताम्—"स्वस्ति। आसीत् खलु श्रीमान् सर्वदा सदयदृष्टिरावयो। अतोऽपक्रमपरावप्यावा भवता विश्वासपूर्वक-मस्मत्सात्कृत कार्तस्वरराशिमपहृत्य नवापराधकलङ्कितौ भवितु नार्हाव।"

अत्रेद द्रष्टव्यम्। पूर्वमेकदा तयोर्द्वयोरपि दोषिणोर्मोषदोषादेव

दण्ड आदिश्यत। एर्तांह स्वकरतलगत कनक स्वोपयोगाय परिकल्पयितु तौ शक्तौ। आसीत् पुनस्तयो स्वान्तेऽपि सवृत' कश्चिद्‌त्स सत्यसारल्ययो। तयोरितिवृत्त विविदुषा तद्‌द्वारेण च तदीयगुण-दोषान्निर्णयता नराणा कृते तावत् तौ दुष्कृतिनौ दस्यू तस्करापसदौ चास्ताम्। पर नैकदोषदूषितावपि तौ स्वसेवकविश्वासकला-सुकुशलस्य स्वामिनो विश्वासास्पदता प्रतिपत्तुमपारयेताम्।

बाला! उदारमतिभिर्दूरदर्शिभिश्च भाव्यमस्माभि, न हि सम्प्रधार्या सम्मतिरसमीक्षिता कमप्यभिलक्ष्य। वरं खलु यथाशक्य सम्मतिनिर्धारणमन्तरैव स्वकार्यनिर्वहणम्।



# व्यवस्था

पुराकल्पे किलाऽऽर्यावर्तवास्तव्यानामार्याणा विश्वमूलवर्तिव्यवस्थाविषयक कोऽपि हृदयहारी विचार आसीत्।

तद्यथा---अस्मदावासभूतेय वसुधा तदानीं 'जम्बूद्वीप' इति जनैर्व्यपदिश्यते स्म। ते किलैवममन्वत--जम्बूद्वीपोऽय लवणालयेन वलयितो विद्यते। त पुन पृथिवी परिवृणोति, या परित परिखावत् प्रथते पय पारावार। तस्मादूर्ध्वं पूर्ववदेव क्रमशो नवनीत-दधि-सुरा-मधुसागराणामेकैकस्य रशनया वेष्टिता भुवश्चत्वार परिधय सन्ति। तेष्वन्तिमपरिधेर्मेखलायमान सप्तम सिन्धु सशुद्धसलिलस्य। स च सर्वेषामपि सरस्वता स्वादिष्ठ इति।[1]

यदि युष्माभिरद्यत्वे विद्यालयेषूपयुज्यमान जगतो मानचित्रमालोचिष्यते तदा न तत्र मधुसिन्धुर्द्रक्ष्यते न दुग्धसिन्धुर्न वा तेषा कश्चिदपर सिन्धु। अमी आर्या अपि न तान् वस्तुसत्तावतोऽमसत। अद्भुत भङ्गिमात्र तु तद् गभीरतर कमपि भावविशेष व्यञ्जयितुम्।

ससृतावेतस्या सर्वमपि वस्तु व्यवस्थया सस्थाप्यमित्येवमादीनि सत्यानि प्रतिपादयतीय पुरातनपरम्परा। यदि चात्र भुवने प्रत्येक

[1]एषा समुद्राणा पौराणिकनामानि तु लवणोद, क्षीरोद, दध्युद, घृतोद, सुरोद, इक्षूद, स्वादूद इति। ---अनु०

पदार्थो यथास्थानं न्यस्तो न स्यात्, न नामैतत् कदापि सुखावहं समञ्जसं वा वासस्थानं सपद्येत। दुग्ध-दधिज-सैन्धवादीनि सिता-सुरा-सलिलादीनि चोत्तमान्यपि वस्तून्यविभक्तानि सकीर्णानि निरति-शयभीषणतया मिश्रितानि वाऽभविष्यश्चेत् कथं नाम कोऽपि तान्युपभोक्तुं प्रभुरभविष्यत् ?

*

अस्माकं धर्मशास्त्राण्यशेषाणि बोधयन्तितमां नो व्यवस्थाया विधानं नानाविधैः रूपकैः।

तथा हि यहूदिधर्मग्रन्थस्य 'आदिजन्म' (Genesis)-नाम्नि प्रथमपुस्तके सृष्ट्युत्पत्तिप्रसङ्गे एतद्विषयिकेयं विशिष्टकथा समा-ख्यायते।

आदौ तावत् केवलं साङ्कर्यमासीद्, अर्थात् समन्ततोऽपि सन्तमसस्य चास्तव्यस्ततायाश्च साम्राज्यं बभूव। तथात्वे प्रथमं प्रभुस्तस्यामव्यस्थायां तथैव प्रकाशं चिक्षेप यथा कश्चिन्मनुष्यो मली-मसायां तमसावृतायां दर्यां पदं निधित्सुरादौ तदन्धकारे दीपप्रभां प्रकिरति।

तत्समनन्तरञ्च, बाइबलकथनानुसारं, तस्मात् संकुलादनुदिवसं समस्तवस्तूनि व्यवस्थितरूपेण प्रादुर्भवितुमारभन्त। तेन चान्ततो मनुजोऽजनिष्ट।

उत्कर्षोऽयं मानवस्य यत् तेन सर्वत्रापि व्यवस्थाया विधानं तदनुसन्धानं वा व्यधायितमाम्।

तथा च ज्योतिषिकोऽभिनक्षत्रमुच्चक्षुरन्तरिक्षस्य मानचित्रं रचयति, भासमानानां खेचराणां समसचारमालोचयति, अभिदधाति

तान् अभिधाभि गणयति च गतिं प्रभाकरपरिक्रामिणा ग्रहाणाम्। तेन चासौ प्रागेव सूचयति कदा मेदिन्या दिनमणिमण्डलस्य च मध्यगतो मृगाङ्क उपरागमाप्स्यतीति। व्यवस्थातत्त्वबोधनिबन्धनञ्चैतत् सर्वमपि ज्योतिर्विज्ञानम्।

गणितविद्याऽपि तावत् क्रमाधारैव। अत्यन्तशिशवेऽपि बालकाय सङ्ख्याया सक्रमाख्यानमेव सुतरा रोचते। अङ्गुलिभिर्वा स्फटिकगुटिकाभिर्वा गणयन्नसौ 'एक पञ्च त्रीणि दश द्वे' इत्येव सख्यानमसबद्धप्रलापमात्रमेवेति सत्त्वर वेत्तितराम्, गणयति च 'एक द्वे त्रीणि चत्वारि' इत्यादिक्रमेण। अस्मात् क्रमादेव समुदेति समस्तमपि गणितशास्त्रम्।

अपर च, कञ्चिदपि क्रममन्तरेण तस्या सङ्गीतनाम्न्या कमनीयकलाया का गति स्यात्?

सन्ति खलु सप्त स्वरा स्वरग्रामे—स, रि, ग, म, प, ध, नि' इति। यद्यानुपूर्व्येण ते वाद्येरन् तत् सुस्वर स्यात् पर युगपदेवाऽऽहत्य सर्वेषा स्वराणा सप्लव क्रियेत चेत् विकटकोलाहलमात्रमेव तद् भवेत्। क्रमविशेषेण सुवाद्यमाना एव ते सुष्ठु समीशते समस्वरता स्रष्टुम्। तथा हि—स, ग, प, स इत्येतेषा युगपद्वादनेन समुद्भूत स्वर "पूर्णस्वर" समुदीर्यते। समग्राऽपि सगीतविद्या किलैत क्रममेव समनुरुध्यते।

पुरुषोपज्ञानामन्यविज्ञानाना सकलकलानाञ्चापि मूल व्यवस्थैवेति पार्यते समुपपादयितुम्।

*

किञ्च, अपि नेयमन्येष्वपि विषयेषु तावदेवाऽऽवश्यकी नाम?

यदि किमपि वेश्म प्रविशद्भिर्युष्माभिस्तत्र समस्तवस्तूनी-तस्ततोऽस्तव्यस्ततया प्रास्तानि सर्वाण्युपस्करोपकरणानि च परितो विकीर्णानि निरतिशय रेणुरूषितानि च दृश्येरंस्तदेकपद एवाक्रुश्येत—"अहो अस्तव्यस्तता, अहो कच्चरम्!" यतो हि न किं कच्चरत्व-मपि अव्यवस्थाया एव प्रकारभेदमात्रम्? अस्ति खल्वस्मिन्विश्वे पासो कृतेऽपि स्थान किन्तु तद् युष्मदीयपस्त्यपरिबर्हेषु तु नैव।

तथैव मस्या आस्पद मसीपात्रमेव न त्वास्तरण नापि वा युष्म-दङ्गुलिजातम्।

यथास्थान निहित हि सर्वं वस्तु निर्णिक्त सुषम च प्रतिभाति। शिक्षणालये युष्मत्पुस्तकानाम् आवासे च वो वाससा क्रीडोप-करणाना च कृते प्रत्येकश पृथक् स्थानेन भाव्य यत्र तत्तत्पुस्तकादि-समतिरिक्तमन्यत् किमपि नैव निधीयेत। नो चेत्तद्विषयेऽन्यै सम युष्मत्सङ्घर्षा घटिष्यन्ते, युष्माक पुस्तकानि जीर्णशीर्णतामुपयास्यन्ति, अशुकानि कालुष्यमुपैष्यन्ति, क्रीडनवस्तूनि च विलोपमाप्स्यन्ति। किं च तस्य सङ्करस्य मध्यात् पुस्तकादीनामनुसन्धान पुनरपि तत्सुविन्यसन वा भूयसाऽऽयासेन समधिकधैर्येण च साध्य स्यात्। यदि पुन सर्वे पदार्था यथास्थानमवस्थाप्येरंस्तर्हि सुमहत् सौकर्यं सपद्येत।

मानुषस्य समस्तजीवितम्, सकल कार्यकलाप, देशस्य श्री-समृद्धी चेति सर्वं व्यवस्थासिद्धान्त एव समाश्रियते। अतो हि विधिव्यवस्थासरक्षण देशाधिशासितुरन्यतम· प्रधानधर्म। तदर्थञ्च आ सम्राज, आ राज्ञ, आ राष्ट्रपतेर्वा आहीनतमराजपुरुष सर्वैरपि यावत्साध्य प्रयतितव्यम्। कामपि वृत्तिमुपजीवता प्रत्येक नागरि-केणाऽस्मिन् व्यवस्थासरक्षणकर्मणि हस्तावलम्बन देयमेव। इत्थ

हि स स्वीयसाहाय्येन स्वदेश समर्थ समृद्ध च सविधातु प्रभवति।

विमृश्यता मनाक्, अल्पीयान् व्यवस्थाभङ्ग कीदृशान् भीषण-परिणामान् जनयेत्!

स्थेशन[1] नियुक्तनियोगिवर्गस्य निदर्शनेनैतद् विशदीक्रियते। द्वार-पालो वा, वाष्पयानवाहको वा, लोहपथपरिवर्तयिता वा, यो वा को वाऽपि भवेत्, सर्वस्यापि सविशेषावेक्षण समयनियमयो परिपालन-मपरिहार्यं येनाऽशेषेऽपि राष्ट्रे पर्यटन्ति बहूनि वाष्पयानानि नियत-वेलाया पलविपलविपर्यासमन्तराऽऽयातु प्रयातु च पारयन्तु किञ्च पन्था अपि सबाधो न भवेत्। यदि च दैवादनवधानतो वा तस्या नियमसमयादिव्यवस्थाया मुहूर्त्तमात्रमपि व्यत्यास स्यात् तदा किय-दुत्पातपूर्णा परिणतय सम्पद्येरन्! वाष्पयानस्याऽऽगमने स्वल्पोऽपि कालातिक्रमो भवेच्चेत् सर्वमपि तन्त्रमाकुलीभवेत्। नरा यथा-समय स्वसुहृदो द्रष्टु न शक्नुयु, कर्मकरा अधिकारिणो व्यवसायि-नो वा स्वस्वकार्यालयान् कालातिपातेन प्राप्नुयु, पोतस्य साया-त्रिका पोतमनुप्राप्तु न पारयन्तु, यत्सत्यम्, असमर्था एव यूयमेत-ज्जन्य कृच्छ्रजात चिन्तयितुमपि। यदि समस्तोऽपि नियम सर्वापि च व्यवस्था ससृते सहसैव तिरोहितौ स्याता तदा कीदृगवसाद-करा उदर्का दृक्पथमवतरेयुरिति व्यमर्शि किं कदापि युष्माभि?

अथ घटीयन्त्र निजनैयमिकताया मनोरमनिदर्शनम् अस्मत्पुरतो नोपस्थापयेदुन्मत्तवच्च कदाचिन्मन्दायता कदाचिच्च त्वरितायताम् तदा कस्याऽपि गृहमेधिन सर्वोऽपि दैनिककार्यक्रम कथ विप-

---

[1]स्था+ईशनम् (ईशतेर्ल्युट्), स्था=स्थिति, तत्र ईष्टे, वाष्प-यानस्थितौ प्रभवतीत्यत स्थेशनमुच्यते तत्स्थानम्।

र्यस्येदित्यनायासम् अवगन्तुमल यूयम्। यदि च सा घटिका कृतेऽपि सस्कारे कालमानस्याऽविकलमाकलन कारयितु नाल तदा तद्वहिष्कार एव श्रेयान्।

कदाचित् कस्यापि कृषीवलस्य वशक्रमागतवेश्मनि कस्याञ्चिच्छालाया काऽपि प्रतरा पुरातनी घटिकाऽवर्तत। पञ्चाशदुत्तरशतवर्षाण्यसौ तन्निवेशवासिन स्वीय नियत सुविश्वास्य च टिक्-टिक्-शब्द श्रावयन्ती क्षणमपि नैव व्यश्राम्यत्। प्रत्यह प्रभाते प्रागपरव्यापारात् स क्षेत्रपति स्वभवनभूमेरवतीर्य घटिकोपकण्ठमेत्य प्रेक्षते स्म सा यथार्थं समय सव्यनक्ति न वेति। एकदा प्रत्यूषे प्रकोष्ठ प्रविशन्तमेव त घटिका भाषितुमारेभे—"निजव्रतेऽविरत निरताया सुनियततया समय निरूपयन्त्याश्च मे प्रयाता. पञ्चाशदुत्तरशताधिका शरद, श्रान्ताऽहमधुना। ततश्च टिक्-टिक्-रवाद् विरम्य विश्राम निषेवेय चेत्साम्प्रतम्, तदसाम्प्रत किम्?"

"मम सुघटिके, न हि ते युक्तमभियोक्तुमेतत्। मन्ये विस्मृताऽसि यत् प्रत्येक टिक्-टिक्-क्वणितमनु निमिषमित विश्रामं विन्दसि एव त्वम्" इति विचक्षण. क्षेत्रपतिस्ता प्रत्याचचक्षे।

ततश्च घटिका पल परिमृश्य पुनरपि यथापूर्वं स्वव्यापारमुपचक्रमे।

शिशव! किं निदर्श्यते दृष्टान्तेनैतेन? एतदेव यद् व्यवस्थितव्यापारे श्रान्तिर्विश्रान्तिश्च परस्परपूरकत्वेन युगपत् प्रवर्तते, किञ्च नियमानुसरणेन भूयान् प्रयास. परिहर्तु पार्यते पुसा इति।

*

यथायथ समन्विति. पदार्थाना क्षमतामतिमात्र वर्धयति। अपि

नाम न तान्येव यन्त्राणि वीर्यवत्तराणि येषा दन्ता उद्यामा अन्ये-ऽवयवाश्च स्वस्वकार्यं सूक्ष्मतया सुव्यवस्थया च समाचरन्ति? तादृशयन्त्रेषु च क्षुद्राऽपि कर्षणी यथास्थानमवस्थिता सती यन्त्र-गतिनियामकगुरुचक्रवदेव महीयसी।

एवमेव स्वकार्यं सावधान विदधानो बालो विशालविश्वाङ्ग-भूतस्य स्वविद्यालयस्य स्वोदवसितस्य वा व्यवस्थाया सोपयोगमङ्ग सन् विश्वस्यापि उपयोगाय कल्पते।

आदौ, व्यवस्थामयजीवनाभ्यास किञ्चित् कृच्छ्रसाध्य। पर श्रमादृते तु नरो लेशमपि शिक्षितु नालम्।

न सुकर किलाऽभ्यासस्तरणस्य, तरणिवाहनस्य, व्यायामस्य मल्लयुद्धस्य वा। तथापि नित्याभ्यासेन शिक्षितुमीश्यते सर्वमेतत्। इत्थञ्च कालक्रमेण वय सकलमपि कर्म सुनियतरीत्या सर्वथा-ऽनायासेनैव च सपादयितु विद्म। तत पर चाऽव्यवस्था नाम अस्मभ्यम् उत्तरोत्तरमप्रीतिकरी परितापिनी च प्रतिभाति।

बाला! प्रथमतो यूय पदे पदे प्रस्खलन्त पतन्त प्रहृता रुदन्तश्चैव पादचारमशिक्षध्वम्। साम्प्रत तु प्रकाममनवहिता अपि क्रामथ, विदग्धञ्च धावथ। व्यवस्थाया भव्यनिदर्शन खल्वय गमनधावनात्मको युष्मद्व्यापार। तत्र हि युष्माक शिरामासपेश्यो-ऽशेषाश्चान्ये वपुषोऽवयवा व्यवस्थितरूपेणैव व्याप्रियन्ते।

यत्सत्यम्, एवमभ्यस्यता पुसामन्ततो व्यवस्था स्वभाव एव सपद्यते।

यथाविधि यथासमयं व्यवस्थापूर्वकञ्च कार्यसपादनेन न पार-यिष्यामो हसितु प्रमुदिता इवाऽवस्थातुञ्चेति न जातु चिन्तनीयम्। प्रक्रमपूर्वक कार्यं कुर्वता पुसा स्ववदन विषादमलिन विधातव्यमेवेति नास्त्येष नियमः। एतस्य च सत्यता साधयितु वय व्यवस्थाविषयक

पाठमिम मनोरञ्जनेन सह समाप्स्याम ।

अवधीयता दृष्टान्तोऽय समयपालनस्य न पुनराधीयता धीरनुवर्तनेऽस्य ।

आसीदरबदेशस्य कस्याश्चिद् योषित कोऽपि प्रेष्य । एकदा सा पावक प्रदीपयितुकामा तमङ्गारराशिमानेतु प्रतिवेशिवेश्म प्रैषिषत् । गच्छतस्तस्य, मिश्रदेश प्रति प्रस्थित कोऽपि सार्थो नयनपथ प्राप्त । कञ्चित् काल तस्य पान्थै सह सलपन् स तैरेव सम यातु मतिमकरोत् । एवमासवत्सरमसौ प्रवासमसेवत ।

तत ऊर्ध्वं तदध्वगसङ्घेन सह सन्निवृत्तोऽसौ स्वस्वामिन्यनुशासन सस्मरन्नङ्गारचयमुपयाचितु प्रतिवासिपस्त्यमयासीत् । तत सधुक्षिताङ्गारानादाय प्रत्याव्रजन् वर्त्मनि विषमीभूतपदोऽसौ न्यपतत्, अङ्गाराश्च तदीयहस्ताग्रात् स्रस्ता निर्वाणा, उदगिरच्चासौ समुच्चै ––"अहो गर्ह्या खलु त्वरा"।



११

# विरचनञ्च विनाशनञ्च

बाला, सुविदितमेव युष्माक 'विरचन' 'विनाशन' चेति शब्दयो किमभिधेयमिति ।

शस्त्रास्त्रपाणि कश्चन शूरवीर कमपि विनाशयितु प्रतिष्ठते ।

कोऽपि शिल्पी निर्मास्यमानमन्दिरादेर्मानचित्रमारचयति, वेश्म-प्रतिष्ठा च प्रवर्तयति । ततश्च कर्मकराणा कर्मठा करा कृषकाय कुटीर पृथिवीश्वराय च प्रासाद प्रकल्पयन्ति ।

'नाशनाद्रचन श्रेय' इति सत्येऽप्यस्मिन् वचसि कदाचिद् विनाशनमप्यावश्यककार्यकोटिमाश्रयते ।

ऊर्जस्विहस्ता बलिष्ठबाहवो बाला ! अपि यूय केवल निर्माणमेव करिष्यथ विनाश च न कदाप्याचरिष्यथ ? आचरिष्यथ चेत्तर्हि कस्य ?

अत्र विषये भारतवर्षीया लोककथेयमाकर्ण्यताम् ।

एकदा कोऽपि नवजातशिशु क्वाप्युपवने पतितोऽवाप्यत । स हि तत्र स्वपन् परासुतामित स्यादिति सभाव्येत युष्माभि यतस्त तत्र समपास्य प्रयाता तस्य प्रसूस्त प्रत्यानेतु मनागपि नाचकाङ्क्ष । ततस्तस्य किमजनीति जानीथ किम् ? तदुपवनस्थस्य 'इलुप्पै'[1]पादपस्य कस्याऽपि सुमनोहरसुमनसा सुमधुरमकरन्दस्तस्य वदने स्यन्दमानस्त सवर्धयामास । अथैकदा काचिद् दयान्विता वनिता देव-

---

[1]तमिलभाषाशब्दोऽय मधूकद्रुमवाची । —अनु०

वन्दनार्थं तद्वनान्ताददूरवर्ति हरमन्दिर तद्वर्त्मना व्रजन्ती त दारक तद्दश दृष्ट्वा दयार्द्रहृदया त स्वमुत्सङ्गमारोप्य पत्यु समुपान्तमानयत। स तु निरपत्यस्त सप्राप्य सुतरा प्रीत स्वनन्दनमिव तमभ्यनन्दत्।

तौ दम्पती 'इलुप्पै'-गुल्ममध्यादधिगतमनवगतगोत्र तं पुत्रतया प्रतिपद्य पालयितुमुपाक्रमेताम्। तयो प्रतिवासिनस्तु 'कमप्यज्ञातकुलशील शिशुमिमौ स्वीकृतवन्तौ' इति कृत्वा तत्परिग्रहवासरात् प्रभृत्येव तावुपहसितु भर्त्सयितुञ्च समारभन्त। ततस्तौ तच्छिशुसवर्धनजन्या समीपवर्तिनामप्रीतिपात्रता परिहर्तुकामौ स्वगोशालाया वलभ्यामवलम्बिताया पर्यङ्किकाया त समारोप्य तत्पालनस्य समस्तमपि भर तद्गोशालानिवासिनि [1]परियाजातीये परिवारे न्यस्तवन्तौ।

अथ समतिक्रान्तेषु कतिपयवर्षेषु पुष्टावयवो भास्वत्प्रतिभ प्राप्तवया स पृथुकस्तौ कृपालू पालयितारावुत्कलापयित्वा परिहृतापरसहाय प्रवासाय प्रतस्थे। कञ्चित्काल क्रमित्वा स क्लमापनोदाय कस्यापि तालतरोरवस्तादस्वाप्सीत्। अहो! स पादपोऽपि त प्रीतिपूर्वकमातपात् परितत्रे। मन्ये सोऽपि तस्मिन् तथैवाऽस्निह्यद् यथा सा महिलामतल्लिका या तमुपवनादानीय परिपालयाम्बभूव। सुदीर्घकाण्डस्तृणद्रुमोऽपि स्वपत्रै पुमास समस्तदिवसमातपात् परित्रातु पारयेदिति क प्रतीयात्? तथाप्येव जनश्रुतिर्यथा तस्य शाखिनश्छाया सुनिश्चला तिष्ठन्ती विश्राम्यन्त त सातत्येन आतपादपालयदिति।

---

[1]'परिया' इति चण्डालवाचक तमिलभाषाशब्द.।

तत् सर्वं कुत कथञ्च सवृत्तम् ?

आ प्रसवदिवसात् प्रवर्तमानस्य तत्पृथुकपरित्राणस्य कि प्रयोजनमभूत् ? किमिति च तालतरुस्तमातपात् परितत्रे ? यतो हि तस्य जीवन बहुमूल्यमविद्यत। तेन च परत श्रीतिरुवल्लुवनाम्ना कमनीय'कुरल्'काव्यकर्त्रा कीर्तिमता तमिलकविना भाव्यमासीत्।

सन्तीह ननु मानवा वस्तूनि च यान्यवश्य सरक्ष्याणि यतस्तानि ससृतये सदेशानाहरन्ति।

सौभाग्यजुषो वय यत्प्रभुरस्मभ्यमूर्जस्वलौ भुजौ व्यतरद् ययो. सामर्थ्येन वय सत्य-शिव-सुन्दरवस्तूनि वर्मभिरिवाऽऽवरीतुमामयाद् अपायात् वा परिपातु च पारयाम।

तेषामेव वस्तूना त्राणार्थमस्माभि. समये समये युद्ध ध्वसश्च विधेये एव।

तिरुवल्लुवो न केवल मर्त्यानात्मनोऽमृतवचास्येवाऽऽस्वादयदपि त्वसौ प्रतियोद्धु व्यापादयितुञ्चाप्यवेदीत्। स हि 'कावेरीपाक्कम्'-ग्रामस्य निशाचर निषूदयाञ्चकार।

आसीत् कावेरीपाक्कम्-नामके ग्रामे कोऽपि क्षेत्रपति पशुसहस्राधिपति सुविस्तृतसस्यभूस्वामी च। तज्जनपदोपान्तेषु कोऽपि दैत्योऽदभ्रमुपद्रव व्यदधात्। सज्ज सस्यमसौ समूलमुन्मूलयति पशून् पुसश्च पर्यालीकरोति स्म। तेन हि तन्निवसथवासिना स्वान्तानि नितमामताम्यन्।

तस्मात् स लक्ष्मीवान् क्षेत्रपतिरेवमाख्यापयाम्बभूव—"यः क्षत्रियोऽस्मानस्य राक्षसस्य सक्षोभान्मोचयिष्यति तदर्थमह वस्त्य वप्र प्रभूतवित्तञ्च प्रदास्यामि।"

व्यतीतेऽपि बहुतिथे काले कश्चिदपि वीरस्तत्कार्यार्थमग्रतो

नाजगाम। तत स कृषीवल शैलाश्रयानृषीन् शरण प्रपद्य परित्राणोपायमप्राक्षीत्।

"तिरुवल्लुवमुपयाहि" इति तेऽब्रुवत।

तथेति प्रतिपद्य त तरुणकवि समुपसृतोऽसौ साहाय्य प्रार्थयामास। स तु भसितलेशमाहृत्य तेन स्वकरतले पावन पञ्चाक्षर[1] सलिख्य मन्त्रान्तसमाम्नाय च तद् भस्म नभसि व्यकिरत्। तेषा मन्त्राणा वर्णानाञ्च वीर्येण सोऽसुर परासुरासीत्। तेन च ननृतुरानन्दनिर्भरा कावेरीपाक्कम्-वर्तिनो नरा।

तत कतिपयवत्सरात्यये तिरुवल्लुवो [2]मधुरापुरमुपययौ। तत्र तस्य रमणीयकाव्यमाकर्णयितु महाल्लोकसमूह समवेतोऽभवत्। कुञ्जाऽभ्यन्तरोपलब्धबालेन निबद्धाम् "उपकारात्पर लोके दुर्लभ सुकृत परम्". इत्यादिपदावलि निशम्य मन्त्रमुग्धा सवृत्ता. सर्वेऽपि।

तत्रैव कस्यापि समुत्फुल्लसरोरुहस्य प्रसन्नसलिलस्य सरसः समीप सङ्घफलके केषाञ्चित् सूरीणा समुदाय समासीन आसीत्। ते हि त हीनवर्णं सहचरकवि 'सनाथीक्रियतामिदमासनम्' इत्यामन्त्र्य तस्मिन् पीठे तस्मै स्थान प्रदातुमनसो नासन्। ततश्च त प्रश्नैः पर्याकुलीकृत्य तत्प्रमादे कस्मिश्चित् त निग्रहीतुमीहमाना अमी एवमाहु, "रे वृषल, निधेहि स्वकाव्यकृति सङ्घफलकेऽस्मिन्। सुन्दरसाहित्यिककृतिश्चेदिय तर्हि फलक स्वात्मनि कुरलतिरिक्ताय कस्मैचिदप्यपरस्मै स्थान न सम्प्रदद्यात्।"

विन्यस्तमात्र एव च पुस्तके तिरुवल्लुवेन तत्फलक किल

---

[1]शिवस्येदम्। [2]"मदुरा' इति अद्यत्वे ख्यातम्। —अनु०

तथा सचुकोच यथा तस्मिन् केवल तदेव पदमलब्ध। तेन च मधुराया मदोदग्रा समत्सरा सूरयस्तेऽवाक्शिरस सरस्या सलिले समपतन्। आम्, अमी एकोनपञ्चाशत् परोत्कर्षाऽसहिष्णव कवय पद्माकरे पद्माना मध्ये निपेतु। तदनु च व्रीडावनतवदना. जलनिस्यन्दितनवस्ते नि सृता सलिलात्। तद्दिनादारभ्य द्रविडभाषाभाषिण 'कुरल्'सूत्रेषु सातिरेकमनुरक्ता विलोक्यन्ते।

अर्भका, अपि 'कावेरीपाक्कम्'-दैत्यमृत्योर्दुर्मनायिता यूयम्? किं मधुराया एकोनपञ्चाशतो दुष्कवीना पुष्करिण्या पतनमनुकम्पाविषय प्रतिभाति युष्मान्?

सदसद्वस्तुसमन्वित खल्वय ससार। तत्र सद्वस्तूनि तावदस्माभि लात्यानि पाल्यानि च, असद्वस्तूनि पुन प्रतिरोद्धव्यानि प्रध्वसयितव्यानि च।

विदन्ति किलैतस्य विधि तत्सदाशयकविरिव सूरिवरा सर्वे। अलन्तमाश्च ते विविद्वासस्तद् विधातुम्। यथा यथा च बृहतितरा तेषा ज्ञान तथा तथा ते प्रभवन्तितरा तत्साधयितु सम्यक्। किम्बहुना, अप्रतिबुद्धधियोऽबहुलबाहुबला बाला अपिताननुहरमाणा स्वसाहस समेधयितुमलम्।

'तिरुवल्लुव'स्य स्वसा 'अव्वै'महोदया स्वसहोदरमित्थमेवाऽनुचकार।

एकदाऽसौ 'उरैयूर्'ग्रामस्य कस्यामपि प्रतोल्या पृथिवीतले समुपविष्टाऽऽसीत्। तत्रान्तरे कश्चिद् विशाम्पतिर्द्वौ कवी च तेन पथा पर्यटन्त प्रययु। अभ्यर्णे पृथिवीपतौ सा प्रसृतामेका प्रतिसहृत्य तस्मै प्रश्रयमुपदर्शयामास। तत पर प्रत्यासीदति अन्यतरस्मिन् कवौ सा तदादराय द्वितीयामपि प्रसृता सवृतवती।

अन्ते च द्वितीये कवौ तदन्तिकमुपयाते सहसैव प्रसारितपदा सा तस्य पन्थानमुपारौत्सीत्।

धाष्टर्चायमानेऽपि तद्वचवहारे सा स्वमुत्तरदायित्व सम्यगवेदीत्। आसीत् किल कविम्मन्य एव स द्वितीयकवि। प्रतिभाशून्योऽप्यसौ कविरहमित्यभ्यमन्यत।

तद्वचवहारेण व्याकुलित स कविस्ता तद्धेतुमन्वयुङक्त।

"विरच्यता तावन्मदर्थं पद्य किमपि यस्मिन् 'मति'पद त्रि प्रयुज्येत", अव्वै-महोदया प्रत्यवदत्।

ततश्च भूयस पुसस्तत्र समवेतान्निरूप्य स पाण्डित्य प्रदर्शयितु मतिमकरोत्। परमत्यर्थं यतमानोऽपि स स्वकविताया 'मति'पद वारद्वयादधिक प्रयोक्तु न पारयाम्बभूव।

ततश्च, "साऽन्तिमा 'मति' क्व पलायिता या खल्वप्रयुक्ता एव परिहृता त्वया? सा तु त्वत्कविताया न क्वाप्यवलोक्यते" इति सावहास व्याहरन्त्यसौ त कविमानिनमवमानयाञ्चकार।

अप्यशिष्टव्यवहारेण तेन हर्षोऽन्वभावि तया? शान्त पापम्! पर मिथ्याभिमानिन नर सम्मानाऽयोग्यमेव गणयाम्बभूव सा, क सत्कर्तव्य कश्च नेति विवेचने च विचक्षणा ववृते। सा ह्येवमुपदिदेश—"सज्जना! सर्वदा भद्रामेव प्रवृत्ति सेवध्वम्, यथा हसोऽनुवासर विकस्वरसारसामेव सरसी सेवते। दुष्टपुरुषा हि ते ये तथाऽशिवमनुशीलयन्ति यथा गृध्रो दुर्गन्धेन प्रलोभित पूतिगन्धीन् पशूननुसन्दधानस्तेष्वेवाऽवपतति।"

*

ससृते समस्तदेशाना शिशव! कानि ननु तानि कुवस्तूनि

यानि युष्माभि प्रतिरोद्धु शिक्षितव्यम् ? कानि च मानुषेण वशी-कार्याणि विनाशनीयानि वा ? तानि सर्वाण्येव यानि पुरुषस्य प्राणनाशभयमुत्पादयन्ति, तस्याभिवृद्धि प्रबाधन्ते, बलमपहरन्ति, किम्बहुना, तस्य पतनाय परितापाय वा प्रकल्पन्ते।

तरस्विनीना सरितामुपरि सेतु निर्माय परिप्लाविनी पयस्विनीश्च वप्रैर्बद्ध्वा तोयस्य दुर्दम्यरयो नियन्त्रयितव्य ।

तादृशा दृढा दुर्भेद्याश्च पोता निर्मातव्या ये प्रभञ्जनम् उदग्रतरङ्गभङ्गाश्च प्रत्यवस्थातु समर्था स्यु ।

अनूपदेशात् प्राणान्तक पङ्कोऽपवाहयितव्य शोषमुपनेतव्यो वा। एवञ्च, तस्यार्द्रतायामन्तर्हितो ज्वरदैत्य समभ्यर्दनीय ।

यत्र क्वाप्यरण्यपशव पुरुषस्य प्राणसशयमुत्पादयन्ति तत्र ते सप्रहृत्य हन्तव्या ।

प्रशिक्षणकर्मणा तादृशा कुशलभिषज सज्जीकर्तव्या ये जगतो रोगजात तापसतति वाऽपसारयन्तु।

क्षुधाया आदिकारण दारिद्र्य दूरीकर्तुमुद्योक्तव्यम्। इदमेव हि निदान तासा सुतिनीनामार्त्तनादस्य यासा नन्दनैरदनायाऽन्नमपि नासाद्यते।

समुत्सार्याणि ससृतेरन्यायमत्सरदौरात्म्यानि दौर्मनस्यावहानि पुसाम्।

*

कानि पुनस्तानि वस्तूनि यानि पुरुषस्य प्रीते परित्राणस्य च पात्राणि ? तानि सकलान्येव यानि तस्य सजीवनानि समुन्नति-साधकानि सुखसपत्सामर्थ्यसवर्धकानि च।

जगत्या जायमानस्य बालस्य बहुमूल्यजीवन परिपातव्यम्।

उपकारपरा पलाशिन परिपोषणीया। प्रिया पुष्पक्षुपाः अन्नवनस्पतयश्चाऽऽरोपणीया।

सुदृढा स्वास्थ्यप्रदा विस्तीर्णाश्च वसतयो निर्मातव्या। पवित्र-मन्दिराणि प्रतिमा प्रतिकृतय परिभूषितपात्राणि कार्मिकाशुकानि कमनीयकाव्यानि वल्गुगीतानि च सावेक्ष रक्षणीयानि। अलमति-पल्लवितेन, यद्यदपि वस्तु सुन्दरत्वात् मुद समेधयति तत्तत्सावधानं सरक्षितव्यमिति।

भारतदेशस्य देशान्तराणा च शिशव! एतदशेषमप्यतिशय्य पुसा स्नेहस्यन्दिना सहृदयाना सद्विमर्शकाना मनीषिणा न्याय्य-सत्कर्मकृता कर्मठाना च सुरक्षा विधातव्या।

इति शम्



# विशेषविवरणम्

| पृष्ठाङ्क | पदानि | व्याख्या |
|---|---|---|

१ **नियन्त्रणखलीनमपेक्षन्ते**–नियन्त्रण नियमनमेव खलीन कविका, 'कविका तु खलीनोऽस्त्री' इत्यमर, तत् अपेक्षन्ते आवश्यकतयाऽऽकाङ्क्षन्ति ।

२ **उष्णजलपात्रपाणि**–उष्ण प्रतप्त यत् जल तस्य पात्र भाण्ड पाणौ हस्ते यस्य स ।

" **प्रत्युत्पन्नमतितया**–प्रत्युत्पन्ना समयोपयुक्ता सद्य प्रतिभानवती वा मतिर्बुद्धिर्यस्य तस्य भावस्तत्ता तया, तीक्ष्णबुद्धितयेति यावत्। 'तात्कालिकी तु प्रतिभा प्रत्युत्पन्नमति स्मृता' इति प्रत्युत्पन्नमतिलक्षण सुधाकरे।

" **स्मृत्युपस्थितम्**–स्मृतौ स्मरणशक्तौ उपस्थित सन्निहितमुपगतमिति यावत् ।

" **सुलभकोपाम्**–सुलभ सहज कोप क्रोधो यस्या ता तथोक्ताम् ।

" **प्रतीकारार्हा**–अर्हतीत्यर्ह । प्रतीकार निराकरण समाधान वा, त तस्य वाऽर्हा योग्या, समाधानयोग्या इति भाव । यद्वा, प्रतीकारमर्हन्तीति प्रतीकारार्हा ।

२ **नियन्त्रणसापेक्षम्**—अपेक्षया आकाङ्क्षया सह वर्तते इति सापेक्षम्। नियन्त्रणे नियमने विषये सापेक्षम्, वशीकरणापेक्षमिति भाव। यद्वा, नियन्त्रणस्य सापेक्षमिति नियन्त्रणसापेक्षम्।

३ **रोचिष्यते**—प्रीतये भविष्यति। रुच दीप्तावभिप्रीतौ च इत्यस्य लृट्प्रथमपुरुषैकवचनम्।

" **अवमन्तारम्**—अवज्ञातारम्। अवमन्यते अवमनुते वा इति अवमन्ता तम्। अवपूर्वात् मन ज्ञाने इति दैवादिकात्, मनु अवबोधने इति तानादिकाद् वा धातो कर्तरि तृच्।

" **यथार्थप्रासाद**—यथार्थ प्रासादो यथार्थप्रासाद, वास्तविक राजभवनमित्यर्थ।

" **प्रत्यपकारपरम्**—प्रत्यपकारे वैरनिर्यातने प्रतिहिंसायामिति यावत्, पर परायणम्।

" **सुमधुरस्वरसमन्वितम्**—सुमधुरा सुश्रवा ये स्वरा तै समन्वित युक्तम्।

" **परिदेवनस्वनै**—परिदेवनस्य विलापस्य ये स्वना शब्दा तै।

" **विस्वराऽऽरावै**—विगत स्वरो येभ्यस्ते विस्वरा कर्णकटव इत्यर्थ। विस्वरा ये आरावा कोलाहला तै। विकृत स्वरो येषामेवविधा ये आरावास्तै इति वा।

" **रोषावेशविवश**—रोषस्य क्रोधस्य य आवेश आवेगस्तस्य विवशोऽधीन।

४ **सविचिकित्सम्**—विचिकित्सया सन्देहेन सह यथा स्यात्तथेति क्रियाविशेषणम्।

" **बहुलबाहुबल**—बहुल प्रचुरमत्यधिक वा बाह्वोर्बल यस्य स।

४ **न्यवीविशम्**–अस्थापयम्। निपूर्वस्य विश प्रवेशने इत्यस्य धातोर्णिजन्तस्य लुङि उत्तमपुरुषैकवचनम्।

" **अन्वभावि**–अनुभूतम्। अनुपूर्वस्य भू सत्तायामित्यस्य कर्मणि लुङि प्रथमपुरुषैकवचनम्।

" **व्यात्तवदन**–व्यात्त विवृत वदन मुख येन यस्य वा स।

५ **नावाऽभिधम्**–'नावा' इति अभिधा नाम यस्य तम्।

" **अपराद्धेषुम्**–अपराद्ध लक्ष्याद् भ्रष्ट इषुर्बाणो यस्य तम्।

६ **यथास्मदिच्छम्**–अस्माकमिच्छा अस्मदिच्छा, तामनतिक्रम्येति यथास्मदिच्छम्। 'यथा'पदमत्र पदार्थानतिवृत्तिवाचकम्। अस्मदिच्छानुसारम् इत्यर्थ।

७ **वशीकरणार्हा**–वशीकरण नियन्त्रणमर्हति तद्योग्या भवतीति वशीकरणार्हा, नियन्त्रणोचिता इत्यर्थ।

" **प्रतिभया सम्पन्न**–प्रतिभा नवनवोन्मेषशालिनी प्रज्ञा, तया सपन्नो युक्त।

" **सदर्पातिशयम्**–दर्पस्य गर्वस्य य अतिशय आधिक्य तेन सह यथा स्यात्तथा।

" **अभ्यस्तचरीभ्य**–प्राक्शिक्षिताभ्य। पूर्वमभ्यस्ता इति अभ्यस्तचरी। 'भूतपूर्वे चरट्' इति चरट्, टित्त्वात् ङीप्। ङीबन्तात् पञ्चमीबहुवचनम्।

८ **उदग्रसयमम्**–उदग्रस्तीव्र य सयमो निग्रहस्तम्।

" **वल्गासनाथीक्रियते**–वल्गया प्रग्रहेण सनाथ युक्त इति वल्गासनाथ, अवल्गासनाथ वल्गासनाथ सपद्यते, तथाभूत क्रियते इति वल्गासनाथीक्रियते।

९ **ज्वालावलीवलयम्**–ज्वालाना वह्निशिखाना या आवली माला

समूह इति यावत्, तस्या य वलय मण्डल तम्।

९ **ज्वालाजालस्य**—ज्वालानामग्निशिखाना यत् जाल समूह तस्य।

" **आ वर्षत्रयवयस्कशिशुभ्य**—वर्षाणा त्रय वर्षत्रयम्, आ वर्षत्रयात् इति आवर्षत्रयम्, वर्षत्रयपरिमितमित्यर्थ, वय आयुर्येषा ते च ते शिशवो बालाश्चेति तेभ्य।

" **आसप्तशरदायुष्का बाला**—शरद् वर्षम्। सप्ताना शरदा समाहार सप्तशरद्, आ सप्तशरद इति आसप्तशरदम्, सप्तशरत्परिमितम् इत्यर्थ, आयुर्येषा ते तथाभूता बाला शिशव।

" **भयसङ्केतसमकालम्**—भयस्य सङ्केतो भयसङ्केत, तस्य कालेन सम कालो यस्य कर्मण (यस्मिन् कर्मणि वा) तद्यथा स्यात्तथा। 'क्रियाविशेषणाना च क्लीबतेष्यते' इति क्लीवत्वम्।

१० **जालमार्गप्रविष्टचामुण्डादेवीमण्डपमध्यभाग**—जालमार्गेण वातायनेन प्रविष्ट चामुण्डादेव्या मण्डपस्य मध्यो भागो मन्दिरस्य गर्भगृहमित्यर्थ येन स तथोक्त।

" **पूजाबलीभवितुम्**—पूजायै बलि पूजाबलि, अ-पूजाबलि पूजाबलिर्यथा सपद्यते तथा भवति इति पूजाबलीभवति, तथा भवितुम्।

११ **प्राप्तभयसङ्केत**—प्राप्तो भयस्य सङ्केत इङ्गित येन स तथोक्त।

" **वह्निनिर्वापका**—वह्ने अग्ने निर्वापका शमयितार। निर्वापका—'निर्' इत्येवम्पूर्वात् वा गतिगन्धनयो इत्यस्मात् णिजन्तात् कर्तरि ण्वुल्।

" **श्वासरोधकवाष्पेण**—श्वासस्य प्राणनक्रियाया रोधक प्रतिवारको यो वाष्पो वायु (गैस)-विशेषस्तेन।

" **भूकम्पकम्पमाननिकेतनेभ्य**—भुव पृथिव्या य कम्पश्चलन तेन

कम्पमानानि यानि निकेतनानि गृहाणि तेभ्य ।

१३ **लङ्काख्यरम्यद्वीपस्य**–'लङ्का' इति आख्या नाम यस्य स लङ्काख्य, तथाभूतश्च रम्य सुन्दरश्च यो द्वीपस्तस्य।

" **आत्मबलविभूषित**–आत्मा देही, देहाधिष्ठाता जीवात्मा क्षेत्रज्ञ पुरुषो वा, 'क्षेत्रज्ञ आत्मा पुरुष' इत्यमर, तस्य यद् बल तेन विभूषित अलङ्कृत, सुसपन्न इति यावत्।

१४ **अश्रुतपूर्वम्**–पूर्व श्रुत श्रुतपूर्वम्, तन्न भवति इति अश्रुतपूर्वम्।

१५ **कर्णाभ्यर्णचरीकरोति**–कर्णस्य अभ्यर्णे समीपे चरन्ति इति कर्णाभ्यर्णचराणि, अकर्णाभ्यर्णचराणि कर्णाभ्यर्णचराणि सपद्यन्ते, तानि करोति कर्णाभ्यर्णचरीकरोति श्रावयतीत्यर्थ ।

" **अभ्यषेणयन्**–सेनयाऽभियाति आक्राम्यति वा अभिषेणयति। 'सत्यापपाश ' इत्यादिना सूत्रेण सेनाशब्दात् णिच्। अभिपूर्वात् 'सेनि' इति नामधातोर्लङ्प्रथमपुरुषबहुवचने 'अभ्यषेणयन्' इति रूपम्।

" **साटोपम्**–आटोप आडम्बरम्, तेन सह यथा स्यात्तथेति क्रियाविशेषणम्।

" **न तृणायाप्यमन्यत**–न आद्रियत। अनादरार्थे 'मन्य'कर्मणि चतुर्थी, न किमपि अगणयन् इत्यर्थ ।

१६ **दशोत्तरैकोनविंशतिशततमस्य**–दश उत्तराणि अधिकानि येभ्यस्तानि दशोत्तराणि दशाधिकानि इत्यर्थ, तथाभूतानि यानि एकोनविंशति शतानि तेषा पूरणस्तस्य। पूरणार्थे डट् तमडागमश्च।

" **उत्तमाशान्तरीपम्**–उत्तमाशा इति अन्यतमस्य अन्तरीपस्य

नाम, उत्तमाशा चासौ अन्तरीपश्चेति उत्तमाशान्तरीप तम्।

१६ **घोषणासमकालम्**–घोषणाया कालेन सम समान काल समयो यस्य कर्मण तद्यथा स्यात्तथा।

" **उपतीरम्**–'उप' इति समीपवचनमव्ययम्। तीरस्य तटस्य समीपे इति उपतीरम्।

१७ **प्रेतपथातिथित्वम्**–प्रेताना मृताना य पन्था मार्गस्तस्य अतिथित्वम् अतिथिभावम्, मृत्युमिति यावत्।

" **पञ्चशतनिशान्तशालिनम्**–पञ्चाना शताना समाहार पञ्चशतम्, पञ्चशतेन पञ्चशतपरिमितै निशान्तैर्गृहै शालितु शील यस्य तम्, पञ्चशतसख्याकैर्गृहैर्युक्तमित्यर्थ ।

" **आसरित्तीरविस्तृतशाखस्य**–सरितस्तीर सरित्तीरम्, आ सरित्तीरात् आ नदीतटात्, नदीतटपर्यन्तमिति यावत्, विस्तृता सृता शाखा यस्य तस्य तथोक्तस्य।

" **प्राज्यजिज्ञासाकुल**–प्राज्या प्रभूता, बहुरिति यावत्, जिज्ञासा ज्ञातुमिच्छा तयाऽऽकुल आतुर ।

" **महासाहससपन्नमानस**–महत् गुरु यत् साहस तेन सपन्न युक्त मानस मनो यस्य स तथाभूत ।

१८ **तत्पावनोपदेशपरिपूतचेतस**–तस्य (महात्मनो बुद्धस्य) पावनै पवित्रैरुपदेशै परिपूतानि पवित्रीकृतानि चेतासि चित्तानि येषा ते तथोक्ता।

" **महीयस्साहससव्यपेक्षम्**–विशिष्टा अपेक्षा आकाङ्क्षा इति व्यपेक्षा, तया सह वर्तते इति सव्यपेक्षम्। महीय महत्तर यत् साहस तस्य तस्मिन् वा सव्यपेक्ष सापेक्षम्, तदाश्रितम् इति यावत्।

१९ **भीषणशिलाभुशुण्डीवर्षात्**–भीषणाना भयङ्कराणा शिलाना महापाषाणाना भुशुण्डीनाम् अस्त्रविशेषाणा च यो वर्ष वर्षण निरन्तरक्षेपणमित्यर्थ, तस्मात्।

" **सर्जरसवर्त्तिका**–सर्जरसस्य यक्षधूपस्य वर्त्तिका शलाका।

२० **'न भव निराश' इति**–पुरुष इति सबोधनपदम्, हे पुरुष! विषादे दुखे निराश नास्ति आशा यस्य यस्मिन् वा स तथोक्त (यद्वा, निर्गता आशा यस्मात् स तथोक्त) हताश इति यावत्, न भव न स्या। कुत? हर्षनिमेष हर्षस्य आनन्दस्य निमेष क्षणम् एकक्षणपरिमितोऽपि हर्ष इत्यर्थ, त विषादम् अपहरिष्यति दूरीकरिष्यति इत्यस्माद् हेतोरिति शेष। दहनमय दहनो वह्नि, स प्रकृत उच्यते अस्मिन् इति दहनमय, यद्वा दहन प्रकृतिर्यस्य स दहनमय, दहनशब्दात् 'तत्प्रकृतवचने मयट्' इति मयट्, अग्निप्रचुर प्रतप्तो वेत्यर्थ मरुवात मरो मरुभूमेर्वात वायु प्रवहतु प्रकर्षेण वहतु चलतु, प्रकाममिति शेष, असौ स मरुवात मृदुमरुदवशेष मृदु कोमल मरुत् वायु अवशेष अवशिष्टस्वरूप यस्य स तथोक्त भविता भविष्यति, अय भाव–वातु नाम अतितप्त मरुवात पर तदनन्तर तत्स्थाने शीतल समीरोऽवश्य सरिष्यति॥१॥

" **'ख वृणोतु' इति**–काममिति अव्यय यथेष्टमित्यर्थे, 'काम प्रकाम पर्याप्तम्' इत्यमर। कराला भयानका घनमाला घनाना मेघाना माला आवलि खम् आकाश काम यथेष्ट वृणोतु आच्छादयतु। कच्चित् इति अव्यय कामप्रवेदने, 'कच्चित् कामप्रवेदने' इत्यमर, कामप्रवेदन स्वाभिप्रायाविष्करणम्।

(सा घनमाला) विलय विलोपम् एतु गच्छतु च कच्चित्, 'विलय यास्यति' इति वक्तुरभिप्राय प्रवेद्यतेऽत्र 'कच्चित्'-पदेन। वह्निज्वाला वह्ने अग्ने ज्वाला शिखा तव ते सामग्रीजात सामग्र्या सकलवस्तूना जात समूह तत् अ-दग्ध्वा अज्वालयित्वा। नञ्पूर्वसमासत्वात् क्त्वो ल्यबभाव। शाम्यतु प्रशम, निर्वाणमिति यावत्, गच्छतु कच्चित्, निर्वाणमेष्यति इति कवेरभिप्राय ॥२॥

२० **'आयाताऽपि' इति**–आयाता आगताऽपि विपत्ति आपद् अपयाति अपगच्छति, तेन हेतुना, हेतौ तृतीया, तदापि तस्मिन् समयेऽपि विपत्कालेऽपीत्यर्थ, धैर्य धीरता न विमुञ्च न त्यज। यदि श कल्याणम् इच्छसि वाञ्छसि तर्हि इति शेष, जगदीश जगता लोकानाम् ईश प्रभु परमेश्वरमिति यावत्, भज सेवस्व आराधयेत्यर्थ, यतो हि काल समय परमाश्चर्य परम महत् आश्चर्यं चित्र कुरुते करोति। तथा च कविकुलगुरोर्भणिति–"अघटितघटित घटयति सुघटितघटितानि दुर्घटीकुरुते" इति ॥३॥

२१ **वर्षाभूयिष्ठस्य**–वर्षा भूयिष्ठा प्रचुरतमा यस्मिन् तस्य तथाभूतस्य।

" **बालकाधिष्ठितान्**–बालकै शिशुभि अधिष्ठिता यानतया आश्रिता इति बालकाधिष्ठिता, तान्।

" **दुर्दिनबाधिता**–दुर्दिन मेघाच्छन्न दिन तेन बाधिता विवशीकृता।

" **समपास्यन्**–अत्यजन्। सम्+अपपूर्वस्य असु क्षेपणे इत्यस्य लङ्प्रथमपुरुषबहुवचनम्।

" **प्रासीसदन्**–प्रसन्नम् अकार्षु। षद्लृ विशरणगत्यवसादनेषु

इत्यस्य प्रपूर्वस्य णिजन्तस्य लुङ्प्रथमपुरुषबहुवचनम् । उपसर्गबलाद् धात्वर्थभेद, एतच्च यथाप्रसङ्गम् अग्रेऽपि बोध्यम् ।

२१ **किम्बहुना**–बहुना (उक्तेन) बहुकथनेन किम्, न कोऽप्यर्थ इति भाव, अतो बहु नोक्त्वा सक्षेपेण उच्यते इति तात्पर्यम् ।

" **ऋजीषाऽम्बरीषपिठरादिरसवतीसभारान्**—ऋजीषाम्बरीषपिठरा पाकभाजनविशेषा । ऋजीषम्, अम्बरीषम्, पिठर एतानि आदौ येषा ते ऋजीषाम्वरीषपिठरादय, ते च ते रसवत्या पाकशालाया सभारा उपकरणानि चेति तान् ।

" **त्रिशती**–त्रयाणा शताना समाहार त्रिशती, त्रीणि शतानि त्रिशत वेत्यर्थ ।

" **दैवदुर्विपाकात्**–दैवस्य भाग्यस्य दुर्विपाक दुष्परिणाम तस्मात् । हेतौ पञ्चमी ।

" **बन्दिग्राहम् अग्राहि**–बन्दी इव गृहीत इत्यर्थ । 'बन्दिन्' इति उपमानभूते कर्मणि उपपदे ग्रहेर्णमुल् ।

" **अग्राहि**–गृहीत । ग्रह उपादाने इत्यस्य कर्मणि लुङ्प्रथमपुरुषैकवचनम् ।

" **दुरदृष्टम्**–दुरित्यव्यय निन्दायाम्, अदृष्ट भाग्यम् । निन्दित दुखकर वा अदृष्ट दुरदृष्टम्, दुर्भाग्यमिति यावत् ।

" **सत्प्रकृतिम्**–सती शोभना प्रकृति स्वभावो यस्य तम् ।

" **अवोचत्**–अकथयत् । ब्रूञ् व्यक्ताया वाचि, वच परिभाषणे इत्यनयो लुङ्प्रथमपुरुषैकवचने 'अवोचत्' इति रूपम् ।

" **पिशितशकलम्**–पिशितस्य मासस्य शकल खण्डमिति पिशितशकलम् ।

२२ **समवाशिष्यत**–अवशिष्टमभूत्। सम्+अवपूर्वस्य शिष्लृ विशेषणे इत्यस्य रौधादिकस्य, शिष असर्वोपयोगे इत्यस्य चौरादिकस्य वा कर्मकर्तरि लङ्प्रथमपुरुषैकवचनम्।

" **उत्क्वथितुम्**–निःशेषेण पक्तुम्। क्वथ निष्पाके इत्यस्मात् उदुपसृष्टात् तुमुन्।

" **बाष्पोष्णताप्लुष्ट**–बाष्पस्य या उष्णता तापस्तया प्लुष्ट दग्ध। प्लुष दाहे इत्यस्मात् निष्ठा।

" **ससम्भ्रमम्**–सम्भ्रमो व्याकुलता, तेन सह यथा स्यात्तथा।

" **सरभसम्**–रभसेन वेगेन सह यथा स्यात्तथा।

" **समश्लिषत्**–संश्लिष्टा, समासक्ता। सम्पूर्वस्य श्लिष् आलिङ्गने इत्यस्य लुङ्प्रथमपुरुषैकवचनम्।

" **अकार्षीत्**–कृतवान्। डुकृञ् करणे इत्यस्य परस्मैपदे लुङ्प्रथमपुरुषैकवचनम्।

" **तदवेक्षाध्यक्ष**–तस्य राजकुमारस्य या अवेक्षा अवेक्षण तस्या अध्यक्ष अधिष्ठाता, तदवेक्षणकर्मणि अधिकृत रक्षापुरुष इति भाव।

" **सत्यपि विषादहेतौ**–विषादस्य खिन्नताया हेतु कारण तस्मिन् सति भवत्यपि।

" **प्रत्युदैरयत्**–अकथयत्। प्रति+उत्पूर्वस्य 'ईर क्षेपे' इत्यस्य लङ्प्रथमपुरुषैकवचनम्।

" **विमृशन्**–विमृशतीति विमृशन्, विचारयन् इत्यर्थ। विपूर्वात् मृश आमर्शने इत्यस्मात् लट शतरि, पुंसि प्रथमैकवचनम्।

" **परिहासप्रियः**–परिहास नर्मवचनम्, विनोद इति यावत्, प्रियो यस्य स, विनोदशील इति भाव।

२२ **अवश्यप्रशसनीय**—अवश्य निश्चिन प्रशसनीय प्रशसितु योग्य ।

" **तादृशदारुणदुर्दशायाम्**—तादृशी तथाविधा दारुणा भयानका या दुर्दशा दुरवस्था तस्याम् ।

" **तनीयसीषु**—तनुतरासु, अल्पीयसीषु इति यावत् । इयमनयोरतिशयेन तन्वी इति विग्रहे तनुशब्दात् ईयसुन्, स्त्रियाम् उगितश्चेति ङीप् ।

" **चिन्ताततिषु**—चिन्ता व्यग्रचिन्तनम् । चिन्ताना ततय आवलय समूहा इति यावत् तासु ।

" **मधुविक्रयव्यापारम्**—मधुन पुष्पासवस्य यो विक्रय धनादिना विनिमय तस्य व्यापार व्यवसायम् ।

" **अतिमिष्टव्यवहारतया**—अति अत्यन्त मिष्ट मधुर व्यवहारो यस्या तद्भावस्तत्ता तया ।

" **आकीर्णम्**—आ समन्तात् कीर्ण व्याप्तम्, सकुलम् इति यावत् । आङ्पूर्वात् कॄ विक्षेपे इत्यस्मात् भूतेऽर्थे क्तप्रत्यये क्लीबे प्रथमैकवचनम् ।

" **व्यक्रेष्यत**—विक्रयम् अकरिष्यत् । विपूर्वस्य डुक्रीञ् द्रव्यविनिमये इत्यस्य लृङ्प्रथमपुरुषैकवचनम् । विपूर्वादस्मात् 'परिव्यवेभ्य क्रिय' इति सूत्रेण नित्यात्मनेपदम् ।

" **समक्रेष्यत्**—क्रयम् अकरिष्यत् । सपूर्वस्य क्रीञ्धातो परस्मैपदे लृङ्प्रथमपुरुषैकवचनम् ।

" **कीर्त्यते**—कथ्यते । कॄत सशब्दने इत्यस्य कर्मणि लट्प्रथमपुरुषैकवचनम् ।

२३ **निभाल्य**—दृष्ट्वा । निपूर्वात् भल आभण्डने (आभण्डन निरूपणम्) इत्यस्मात् चौरादिकात् क्त्वाप्रत्यय । उप-

सर्गपूर्वत्वात् धातो क्त्वो ल्यप्। एवमुत्तरत्रापि द्रष्टव्यम्।

२३ **प्रत्यतिष्ठिपत्**—प्रतिष्ठापितवान्। प्रतिपूर्वस्य ष्ठा गतिनिवृत्तौ इत्यस्य णिजन्तस्य लुङ्प्रथमपुरुषैकवचनम्।

" **मधुभाजनराजीम्**—मधुन पुष्पसारस्य भाजनानि पात्राणि तेषा राजी पंक्तिस्ताम्।

" **कटूकरोति**—अकटु कटु सपद्यते तत्करोति। अभूततद्भावार्थे च्विप्रत्यय। कटुरसमय करोतीत्यर्थ।

" **योषिन्मतल्लिकाया**—प्रशस्ता योषित् योषिन्मतल्लिका, तस्या। 'मतल्लिका-मचर्चिका-प्रकाण्डमुद्घतल्लजौ, प्रशस्तवाचका-न्यमून्यय शुभावहो विधि' इत्यमर। 'उद्घादयश्च नियत-लिङ्गा न तु विशेष्यलिङ्गा' इति सिद्धान्तकौमुदी।

" **पण्याजीवाम्**—पण्य विक्रेय वस्तु, तस्य विक्रय इति यावत्, आजीवो जीविका यस्यास्ताम्, वणिज व्यापारिणी वा इत्यर्थ।

" **सममसत**—अमन्यन्त। सपूर्वस्य मन्यते लुङ्प्रथमपुरुषबहुवचनम्।

" **निरूपयिष्यमाणदृष्टान्तात्**—निरूपयिष्यते इति निरूपयिष्यमाण, कथयिष्यमाण इत्यर्थ। निपूर्वात् 'रूप' रूपक्रियायाम् इत्यस्मात् कर्मणि लृट्, तस्य प्रथमासामानाधिकरण्ये शानच्। तथाभूत दृष्टान्त उदाहरण यस्य तस्मात्।

" **समसुस्रुवत्**—अस्रवत्। सपूर्वस्य स्रु गतौ इत्यस्य लुङ्प्रथम-पुरुषैकवचनम्। 'णिश्रिद्रुस्रुभ्य कर्तरि चङ' इति चङ।

" **लाभलिप्सया**—लाभस्य आयस्य लिप्सा लब्धुमिच्छा तया।

" **महामहनीयमहिमा**—महत् अत्यधिक यथा स्यात्तथा महनीय पूजनीय महिमा महत्ता यस्य स, महान् महनीयश्च महिमा यस्य स इति वा।

२३ **विश्वविश्रुत**–विश्वे जगति विश्रुत प्रसिद्ध ।

" **दशशिरसम्**–दश दशसख्याकानि शिरासि मूर्धानो यस्य तम् ।

" **विंशतिबाहुम्**–विंशति द्विगुणितदशसख्याका बाहवो यस्य तम् ।

" **पिशिताशपतिम्**–पिशित मासम् अश्नन्ति भुञ्जते इति पिशिताशा राक्षसा, तेषा पति रावणमित्यर्थं ।

" **न्यशातयत्**–हतवान् । निपूर्वात् शद्लृ शातने इत्यस्मात् णिजन्तात् लङ्प्रथमपुरुषैकवचनम् ।

" **उपन्यस्तपूर्वा**–पूर्वम् उपन्यस्ता इति उपन्यस्तपूर्वा, प्राक्प्रस्तुता प्राग्वर्णिता इति यावत् ।

२४ **तदादेशसपादनसज्जा**–तस्य रामभद्रस्य य आदेश आज्ञा तस्य सपादनाय पालनाय इत्यर्थं सज्जा सन्नद्धा ।

" **विश्वासास्पदेषु**–विश्वासस्य आस्पदानि पात्राणि तेषु ।

" **रणाङ्गणप्रकटिततादृक्पराक्रमान्**–रणस्य युद्धस्य यत् अङ्गण क्षेत्र तत्र प्रकटित प्रदर्शित तादृक् तत्सदृश पराक्रम बल यै तान् ।

" **मणिमाणिक्यमहार्घवसनभूषणानाम्**–मणय बहुमूल्यरत्नानि च माणिक्यानि पद्मरागाश्च, महार्घाणि महान् अत्यधिक अर्घ मूल्य येषाम् एवविधानि वसनानि वस्त्राणि च भूषणानि अलङ्काराश्च, तेषाम् । चार्थे द्वन्द्व ।

" **समुदैरयत्**–अकथयत् । 'प्रत्युदैरयत्'-वत् (पृ २२) व्युत्पाद्यम् ।

" **स्फुरत्प्रभाणि**–स्फुरन्ती शोभमाना प्रभा कान्तिर्येषा तानि तथोक्तानि ।

" **रत्नाभरणानि**–रत्नानि बहुमूल्यमणयश्च आभरणानि भूषणानि चेति तानि ।

२४ **वर्षत्कोषोपरि**—वर्षन् आकाशात् वृष्टिवत् पतन् य कोष निधिर्धनमिति यावत्, तस्य उपरि।

" **अच्छभल्लवलीवदनेषु**—अच्छभल्ला ऋक्षा ते च वलीवदना वानराश्चेति तेषु।

" **भुजाभुजि**—बाहूबाहवि, बाहुयुद्धमिवेति भाव। भुज बाहु, भुजैर्भुजैश्च प्रहृत्येद युद्ध प्रवृत्तमिति भुजाभुजि, बहुव्रीहिसमास, समासान्त इच्प्रत्यय, तदन्तत्वादव्ययत्वम्।

" **कौतुकावहम्**—कौतुक कोतूहल हर्ष वा आवहति प्रापयति इति तत्, हास्यकरम्, विनोदजनकम् इति यावत्।

" **सोत्प्रासम्**—उत्प्रासनमेव उत्प्रास आधिक्यमित्यर्थ। उत्+प्र इत्येवपूर्वात् अस्यते घञ्। उत्प्रासेन सह यथा स्यात्तथेति सोत्प्रासम्, साट्टहास सोपहासञ्चेत्यर्थ। 'स्मृता सोल्लुण्ठसोत्प्राससोपहासा समास्त्रय, इति हलायुध।

" **निरवद्यहार्दिकोल्लासात्**—नास्ति अवद्य गर्ह्य, निन्द्यमिति यावत्, यस्मिन् (यद्वा, निर्गतमवद्य यस्मात्) स निरवद्य, तथाभूतश्च हार्दिक हृदयाद् उद्भूतश्च य उल्लास आह्लाद तस्मात्।

२५ **अर्थपर**—अर्थे अभिधेये, वाच्ये इति यावत्, पर विद्यमान इति भाव, अर्थवाचक अर्थबोधको वा इत्यर्थ।

" **विषमदशासु**—विषमा दारुणा, कष्टप्रदा इति यावत्, या दशा अवस्था तासु।

" **पररुजोऽपवर्जने**—परस्य अन्यस्य रुग् रोग तस्या अपवर्जने दूरीकरणे।

" **दुर्गसञ्चरे**—दुर्ग दुर्गम, य सचर (विकट)मार्ग तस्मिन्।

२६ **वनायुनिवासिषु**–वनायु इति अरवदेशस्य प्राचीन नाम, तस्य निवासिनो वास्तव्या तेषु।

" **दानशौण्ड**–दाने वनादे वितरणे शौण्ड दक्ष, प्रवीण इति यावत्, दानशूर इत्यर्थ ।

" **वदान्यवर**–वदान्या उदारा, दानिन इति यावत्। तेषा तेषु वा वर श्रेष्ठ, बहुप्रद इत्यर्थ ।

" **स्वसमृद्धोपहारदानानाम्**–स्वे निजा समृद्धा ऐश्वर्यशालिन उपहारा प्रीतिदानानि, ते च दानानि द्रव्यवितरणानि चेति तेषा, यद्वा, उपहारा तेषा यानि दानानि वितरणानि तेषाम्।

" **लोचनगोचर**–लोचनस्य नयनस्य गोचर प्रत्यक्ष ।

" **अजूघुषम्**–अघोषयम्। घुषिर् ज-विशब्दने (शब्दे इत्यन्ये) इति भौवादिकात् धातो स्वार्थणिजन्तात्, घुषिर् विशब्दने इति चौरादिकात् वा धातो लुङ, उत्तमपुरुषैकवचनम्।

" **अन्वयुञ्जि**–अपृच्छम्। अनुपूर्वस्य युजिर् योगे इत्यस्य आत्मनेपदे लङि उत्तमपुरुषैकवचनम्।

" **स्वजीविकोपार्जिनाम्**–स्वाम् आत्मन जीविका वृत्तिम् उपार्जितु सपादयितु शील येषा तेषाम्। ताच्छील्ये णिनि ।

" **प्राभृतप्रदानात्**–प्राभृतस्य उपहारस्य प्रदान वितरण तस्मात्।

" **उपहारपरिग्रहीतु**–उपहारस्य प्रीतिदानस्य परिग्रहीता आदाता, स्वीकर्ता इति यावत्, तस्य।

२७ **परमुखापेक्षित्वम्**–परस्य अन्यस्य मुखम् अपेक्षितुम् आशया अवलोकितु शील यस्य तस्य भाव तत्त्वम्।

" **दीनदुर्गतोद्धाराय**–दीनाना निर्धनाना दुर्गताना धनाभावेन दुर्गतिग्रस्ताना च उद्धार परित्राण मङ्गलसाधन वा तस्मै।

२७ **स्वस्थसमर्थानाम्**–स्वस्था नीरोगाश्च ते समर्था बलशालिनश्चेति तेषाम् ।

" **सत्यानुसन्धानाय**–सत्यस्य अनुसन्धानम् अन्वेषणाम्, तस्मै ।

" **समर्पितनिजजीवना**–समर्पितम् उत्सृष्ट, दत्तमिति यावत्, निज स्व जीवन यै ते तथोक्ता ।

" **परितप्यमानमानस**–परितप्यमान दूयमान, दु खाकुलमिति यावत्, मानस मनो यस्य स ।

" **क्षुत्तृषातुर**–क्षुच्च तृषा चेति क्षुत्तृषे बुभुक्षापिपासे, ताभ्या हेतुभूताभ्यामातुर व्याकुल ।

" **लिपिकृत**–लिपि प्रतिलिपि, प्रतिलेखनमिति यावत्, करोति इति लिपिकृत्, तस्य । कृधातो क्विप् ।

" **उपनाथितवान्**–प्रार्थितवान् । उपपूर्वस्य नाथृ याच्ञोपतापैश्वर्याशी षु इत्यस्य कर्तरि निष्ठाया रूपम् ।

" **अनपेक्षमाण**–अपेक्षेते इत्यपेक्षमाण, अपपूर्वात् ईक्षते लट शानच् । न अपेक्षमाण इत्यनपेक्षमाण, नञ्तत्पुरुष, अनाकाङ्क्षन् इत्यर्थ ।

" **क्षुत्क्षामत्वात्**–क्षुधा बुभुक्षया, भोजनाभावेन इति भाव, क्षाम कृश, क्षीण इति यावत्, तस्य भावस्तत्त्व तस्मात् ।

" **क्रमेलकवाहकान्**–क्रमेलकानाम् उष्ट्राणा वाहका वाहयितार, चालका इति यावत्, तान् ।

" **निरतिशयदारिद्रचोपहतम्**–निर्नास्ति अतिशयम् अधिकम् यस्मात् तत् निरतिशयम्, अत्यधिकमित्यर्थ, तथाभूत यद् दारिद्रच निर्धनत्व तेन उपहत पीडित, तम् ।

" **अस्तु तावत्**–भवतु तावत्, आस्ता तावदेतदत्रैव इति भाव ।

अत्र 'तावत्'पदम् अवधिवाचकम्। तथा चाऽमर—'याव-त्तावच्च साकल्येऽवधौ मानेऽवधारणे' इति।

२८ **विपुलबाहुबल**—विपुल प्रचुर बाह्वोर्भुजयोर्बल यस्य स।

" **गुरुमुद्गरम्**—गुरु महापरिमाण यो मुद्गर घन तम्।

" **उद्गूर्य**—उद्यम्य, उत्थाप्य इत्यर्थ। उत्पूर्वात् गूर उद्यमने इत्य-स्माच्चोरादिकात् क्त्वाप्रत्यय। क्त्वो ल्यप्।

" **प्रथमप्रहारपातमात्रे**—पात एवेति पातमात्रम्। मयूरव्यसका-दयश्चेति समास। मात्रशब्दोऽत्र अवधारणार्थक, 'मात्र कार्त्स्न्येऽवधारणे' इत्यमर। तेन सह नित्यसमासत्वात् अस्वपदविग्रहो दर्शित। प्रथम आद्यो य प्रहार आघात तस्य पातमात्र प्रयोगमात्रम् इति प्रथमप्रहारपातमात्रम्, तस्मिन्। प्रथमप्रहारे कृते सत्येव इति भाव।

" **अर्धचन्द्र ददौ**—गलहस्त गलहस्तिका वा दत्तवान्, हस्तम् अर्द्ध-चन्द्राकार कृत्वा तेन गल निष्पीड्य निष्कासितवान् इत्यर्थ, गलहस्तितवान् इति यावत्।

" **दारुणदुर्दैवविवश**—दारुण भयङ्कर यद् दुर्दैव दुर्भाग्य तेन विवश विवशीकृत, बाधित इति यावत्।

**तद्दशादूनम्**—तया दशया अवस्थया दून परितप्त, दु खितमिति यावत्।

" **अशनवसननिवासस्थानादिव्यवस्थाम्**—अशन भोजन च वसन वस्त्रमाच्छादन च निवासस्थान गृह च आदौ येषाम् अपेक्षितवस्तूनामिति शेष, तेषा व्यवस्था प्रबन्धस्ताम्।

" **परिणयार्थिभि**—परिणयम् अर्थयितु शील येषा ते परिणयार्थिन। यद्वा, परिणयो विवाह तेन अर्थिन प्रार्थिन आकाङ्क्षिण

इति यावत्, तै, विवाहेच्छुभि इत्यर्थ ।

२८ **जातानुरागा**–जात उत्पन्न अनुराग प्रेम यस्या यस्या वा सा।

" **दुर्गतिग्रस्तात्**–दुर्गत्या दुर्दशाया कर्त्र्या ग्रस्त आक्रान्त, पीडित इति यावत्, तस्मात्।

" **जुगुप्समान**–निन्दन्। जुगुप्सते इति जुगुप्समान। गुप गोपने इत्यस्मात् निन्दायामर्थे सन्। सन्नन्तात् तस्मात् लट्, लट शानच्।

" **विवाहोत्सवानन्तरम्**–विवाहस्य उत्सव इति विवाहोत्सव। तस्य अनन्तर यथा स्यात्तथा, तस्य पश्चादित्यर्थ।

" **विपिनगर्भम्**–विपिनस्य वनस्य गर्भ अन्तराल मध्यभाग इति यावत्, तम्।

" **मृगयुपुङ्गव**–मृगयुर्व्याध। मृगयूना मृगयुषु वा पुङ्गव श्रेष्ठ। 'स्युरुत्तरपदे व्याघ्रपुगवर्षभकुञ्जरा पुसि श्रेष्ठार्थगोचरा' इत्यमर।

२९ **गणरात्रापगमे**–गणाना बहूना रात्रीणा समाहार गणरात्रम्। 'सख्यापूर्व रात्र क्लीबम्' इति वार्तिकेन क्लीबत्वम्। गणरात्रस्य अपगमे व्यत्यये, समाप्तौ इति भाव। बहुदिनानन्तरमित्यर्थ।

" **उपयियसुम्**–उपयन्तु विवाह कर्तुमिच्छु उपयियसु, तम्। उपपूर्वात् यमे सन्नन्तात् तच्छीलादिषु कर्तृषु उप्रत्यय।

" **निर्कातितव्य**–छेदनीय, निहन्तव्य इत्यर्थ। कृती छेदने इत्यस्मात् निपूर्वात् तव्यप्रत्यय।

" **प्रसक्तनिशितशङ्कुनिवहम्**–प्रसक्त निखात, सलग्न इति यावत्, निशिताना तीक्ष्णाना शङ्कूना कीलकाना निवह समूह यस्मिन् तम्।

२९ **व्रश्चनकन्दुकम्**–व्रश्चनाना छुरिकाणा कन्दुक गेन्दुक, गोल इति यावत्, तम्, छुरिकामयगोलम् इत्यर्थ ।

" **स्वफूत्कारोद्वान्तज्वालजालम्**–स्वै निजै फूत्कारै फूत् फूत् इति ध्वनियुक्तै नि श्वासै उद्वान्त उद्गीर्ण, नासारन्ध्रेण निष्कासित इति यावत्, ज्वालाना वह्निशिखाना जाल समूहो येन तम् ।

" **सपत्राऽकरोत्**–सपत्र शर (तस्य शरीरे) प्रवेशितवान् इत्यर्थ । पत्र पक्ष तेन सह वर्तते इति सपत्र (शर)। अस्मात् 'सपत्र' इति शब्दात् कृञो योगे अतिव्यथने अर्थे डाच्प्रत्यय ।

३० **अभ्युपेयते**–अभ्युपगम्यते, स्वीक्रियते इति यावत् । अभ्युपपूर्वस्य इण् गतौ इत्यस्य कर्मणि लट्प्रथमपुरुषैकवचनम् ।

" **व्याहतप्रयत्न**–व्याहत प्रतिहत, कुण्ठित इति यावत्, प्रयत्न पुरुषार्थो यस्य स ।

" **रोषभाजनम्**–रोषस्य क्रोधस्य भाजन पात्रम्, क्रोधविषय इत्यर्थ ।

" **अजनिष्ट**–जात, सवृत्त इत्यर्थ । जनी प्रादुर्भावे इत्यस्य लुङ्प्रथमपुरुषैकवचनम् ।

" **पूर्वोपन्यस्तचरितम्**–पूर्वं प्राक् उपन्यस्तम् उपक्षिप्त, प्रतिपादितम् इति यावत्, चरित चरित्र यस्य त तथोक्तम् ।

" **स्वार्थकृतकर्मणा**–स्वार्थ स्वस्मै कृत यत् कर्म कार्य तेन । यद्वा, स्वार्थं यथा स्यात्तथा कृत यत् इत्यादि पूर्ववत् ।

" **काष्ठिक समतिशिश्ये**–काष्ठच्छिद अतिरिरिचे अमहीयत वा । काष्ठ पण्यमस्यास्तीति विग्रहे काष्ठशब्दात् षष्ठ्यर्थे ठक् । समतिशिश्ये–सम्+अतिपूर्वस्य शीङ स्वप्ने इत्यस्य लिट्प्रथमपुरुषैकवचनम् ।

३० **तृणीकृत्य**–अतृण तृण यथा सपद्यते तथा कृत्वा। क्त्वो ल्यप्। तृणवत् मत्वा, अवगणय्य इति यावत्।

” **अतिरिक्तवित्तमात्रम्**–अतिरिक्तम् अधिक वित्त धनम् इति अतिरिक्तवित्तम्। अतिरिक्तवित्तमेवेति अतिरिक्तवित्त-मात्रम्। मयूरव्यसकादिवत् समास। स्वधनस्य व्यति-रिक्तभागमेव इति भाव।

” **स्वसमीहितानि**–स्वस्य आत्मन समीहितानि इष्टानि, मनोरथा इति यावत्, तानि। यद्वा, स्वानि समीहितानि इति स्व-समीहितानि।

” **स्वस्तिसमृद्धी**–स्वस्ति क्षेम, मङ्गलमिति यावत्, 'स्वस्त्याशी-क्षेमपुण्यादौ' इत्यमर, स्वस्ति च समृद्धि धनधान्यसम्पन्नता चेति ते।

” **यन्त्रविशारद**–यन्त्रे यन्त्रविद्याया विशारद प्रवीण।

” **व्यवसायकर**–व्यवसाय व्यापार करोति इति व्यवसायकर व्या-पारी इत्यर्थ। ताच्छील्येऽर्थे करोते टप्रत्यय।

” **अनुसन्धायक**–अनुसन्दधाति अनुसन्धत्ते वेति अनुसन्धायक, अन्वेषक इत्यर्थ। अनु+सम्पूर्वात् दधाते कर्तरि ण्वुल्।

” **स्वसभूयकारिणाम्**–सभूय अन्यै सह एकीभूय कर्तु कर्म कर्तु शील यस्य स सभूयकारी। स्वस्य आत्मन सभूयकारिण सहकारिण, सहकर्मिण इति यावत्, तेषाम्।

” **सहयोगेन**–सह अन्येन सह एकस्मिन् कर्मणि योग स्वात्मनो नियोग, योजनम् इति यावत्, तेन, साहाय्येन इत्यर्थ।

” **सहकारित्वनिष्ठानि**–सह अन्यै सह कर्तु शील यस्य तस्य भाव सहकारित्व सभूयकारित्वम्, तस्मिन् निष्ठानि निष्ठितानि,

आश्रितानि इति यावत्।

३१ **कर्मशालापण्यागाराणि**–कर्मशाला शिल्पगृहाणि च पण्याना विक्रेयद्रव्याणामागाराणि भाण्डाराणि च, तानि।

" **व्यवसायसङ्घान्**–व्यवसायस्य व्यापारस्य सङ्घा मण्डलानि तान्।

" **स्वात्मन सम्प्रदत्ते**–स्वात्मन स्वस्य स्वत्वानि अधिकारान् ज्ञापयितु द्योतयितु, प्रतिपादयितु दृढतया प्रमाणीकर्तु च, इद-मित्थमिति दृढ ख्यापयितुम् इति यावत्। सुयोग सदवसर सम्प्रदत्ते ददाति। स्वाधिकाराणा घोषणार्थ प्रस्थापनार्थञ्च अवसर ददाति इति भाव।

" **स्वबलावलम्बनम्**–स्वस्य आत्मन बल सामर्थ्य तस्य अवलम्ब-नम् आश्रयणम्।

" **परस्परोपकारम्**–परस्परस्य अन्योन्यस्य य उपकार हितसाधनम् तम्।

" **अनुशासति**–उपदिशन्ति, शिक्षयन्ति इति यावत्। अनुपूर्वस्य शासु अनुशिष्टौ इत्यस्य लट्प्रथमपुरुषबहुवचनम्।

३२ **ऋतुर्वसन्त इति**–वसन्त एतन्नामक प्रसिद्ध ऋतु, पुष्पसमय इति यावत्, अनारत सर्वदा न लसति न शोभते। शारिका पीतपादा, "मैना" इति नाम्ना प्रथिता पक्षिणी निष्कुटे गृहारामे, 'गृहारामास्तु निष्कुटा' इत्यमर, अनिश रात्रि-न्दिव न कूजति न शब्दायते, मधुरध्वनि न कुरुते इत्यर्थ। हर्षपरम्परा हर्षाणा सुखानाम् आमोदाना वा परम्परा माला, अविच्छिन्नशृङ्खला इति यावत्, सदा सर्वदा न राजते न शोभते। सुहृत्समागम सुहृदा मित्राणा समागम सगम अजस्र निरन्तर न भवति न जायते।

अस्य पद्यस्याशय मूले सम्यग् विवृत, तत्रैव द्रष्टव्य ।

३२ **एतद्गुणानुशीलनावसरप्रदा**—एतस्य अस्य गुणस्य धैर्यनामकस्य यद् अनुशीलन अभ्यसन तस्य अवसर सुयोग प्रददति प्रयच्छन्ति इति ते तथोक्ता ।

३३ **कतिपयहोरावधि**—कतिपया कतिचित् होरा घण्टा, तत्परिमित काल इति यावत्, अवधि सीमा यस्मिन् कर्मणि तद्यथा स्यात्तथा, कतिचिद्घण्टापर्यन्तमिति भाव ।

,, **आमयोपसृष्टतया**—आमयेन रोगेण उपसृष्ट अभिभूत, पीडित इति यावत्, तस्य भावस्तत्ता, तया।

,, **कतिपयदिनात्यये**—कतिपयानि कतिचन दिनानि इति कतिपयदिनानि, तेषामत्यये अपगमे सतीति शेष । गतेषु केषुचिद् दिनेषु इति भाव ।

,, **स्वसमीहितसाधनावधि**—स्वस्य स्व वा समीहित स्वसमीहितम्, निजमनोरथ इत्यर्थ, तस्य साधन निष्पादन, पूर्तिरिति यावत्, तदेव अवधि सीमा यस्मिन् कर्मणि तद्यथा स्यात्तथा, स्वमनोरथपूर्त्ति यावत् इत्यर्थ ।

" **भृशाभियोगात्मकम्**—भृशोऽनवरत अभियोग अभिनिवेश, महोद्यम इति यावत्, आत्मा स्वरूप यस्य तत् ।

" **अविरतकार्यव्यापृतिस्वरूपम्**—अविरता अविश्रान्ता या कार्यव्यापृति कार्ये कर्मणि व्यापृति आसक्ति, लीनता इति यावत्, सा स्वरूप यस्य तत् ।

" **मन्निबद्धश्रद्धा**—मयि निबद्धा दृढ निवेशिता श्रद्धा विश्वासो यै ते तथाभूता ।

" **सप्रश्रयम्**—प्रश्रयण विनयेन आदरेण वा सह यथा स्यात्तथा।

३३ **चित्रविचित्ररुचिरवर्णविलेपनस्य**–चित्राणा नानाविधाना विचित्राणामाश्चर्यकराणा रुचिराणा शोभनाना वर्णाना रङ्गाणा विलेपन तस्य ।

३४ **तदनुसन्धाननिरत**–तेषा रङ्गाणामनुसन्धानमन्वेषण तस्मिन् निरत नितरा रत, सलग्न इति यावत् ।

" **रङ्गगवेषणोद्योगेषु**–रङ्गाणा वर्णाना गवेषणमन्वेषण तस्य (तत्-सबन्धिन इत्यर्थ ) उद्योगा प्रयत्ना तेषु । यद्वा, रङ्गगवेषणाय उद्योगा रङ्गगवेषणोद्योगास्तेषु । 'चतुर्थी' इति योगविभागात् समास ।

" **नवनवप्रक्रियाभि**–नवा नवा इति नवनवा, वीप्सायां द्विर्वचनम्, नित्यनूतना इति भाव, प्रक्रिया विधय ताभि ।

" **पात्रनिर्माणपाकप्रयत्नेषु**–पात्रस्य भाण्डस्य निर्माण विरचन च पाक अग्नौ तापनञ्च तयो तदर्थ वा प्रयत्ना उद्योगा तेषु ।

" **एकतानमानस**–तानम् इन्द्रियग्राह्यविषय इति आप्टेकोष । तान ज्ञानविशेषे इति शब्दार्थचिन्तामणि । एक तान विषयो ज्ञानविशेषो वा यस्य तत् एकतानमेकाग्रमित्यर्थ, 'एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि' इत्यमर, तथाभूत मानस मनो यस्य स ।

" **परीक्षणव्ययभारवहनक्षममात्र**–परित ईक्षणमवलोकनमिति परीक्षण, प्रयोग इति यावत्, तस्मिन् यो व्यय धनसमुत्सर्ग तस्य यो भारो भर तस्य वहन सहनमिति भाव, तत्र क्षममात्र समर्थमात्र । परीक्षणव्ययस्य भार सोढु समर्थ सन्नेव इति भाव ।

३५ **सैकतवप्रम्**–सिकता अस्मिन् सन्तीति सैकत, मत्वर्थेऽण्, यद्वा,

सिकतानां वालुकानां विकारः सैकतः। विकारार्थे अण्। तथाभूतो यो वप्रः चयः तम्।

३५ **प्राकृतिकेतिहासम् अध्येष्यमाणै**–प्रकृतेरयं प्राकृतिकः। तस्येदमित्यर्थे 'अध्यात्मादेष्ठञ् इष्यते' इति ठञ्। तथाभूतः य इतिहासः तम् अध्येष्यमाणैः पठिष्यद्भिः। अधिपूर्वात् इङ् अध्ययने इत्यस्मात् लृट शानच्।

" **अवेष्यते**–अवगस्यते, ज्ञास्यते। अवपूर्वस्य इण् गतौ इत्यस्य कर्मणि लृट्प्रथमपुरुषैकवचनम्।

" **केरल (मलाबार)-मौलिललाम**–केरला मलाबारदेशः तेषां मौले शिरसः ललाम भूषणम्, केरलदेशमौलिमुकुटायमानः इति भावः।

" **द्वादशशतवर्षप्रायपूर्वम्**–द्वादशानां शतानां समाहारः द्वादशशतम्। द्वादशशतं वर्षाणि वत्सराः, तत्प्रायः कालः प्रायशः तत्परिमितः कालः पूर्वो यस्मिन् कर्मणि तद्यथा स्यात्तथा।

" **प्रशस्ताशयताम्**–प्रशस्तः उत्तमः आशयः उद्देश्यं यस्य तस्य भावस्तत्ता ताम्।

" **सिष्णासु**–स्नातुमिच्छुः। ष्णा शौचे इत्यस्मात् इच्छायां सन्, ततः सन्नन्तात् 'सिष्णास' इति धातोः ताच्छील्ये उप्रत्ययः।

" **ग्राहनिगृहीतम्**–ग्राहेण अवहारेण जलजन्तुविशेषेण निगृहीतः (पादे) गृहीतः तम्।

" **विकटवेलायाम्**–विकटा भीषणा वेला समयस्तस्याम्।

" **अवसिताऽऽशा**–अवसिता समाप्ता आशा यस्याः सा तथाभूता।

३६ **समुज्जजृम्भे**–समुद्भूता, समुद्गता वितता वाऽभत् इत्यर्थः। समुत्पूर्वस्य जृभी गात्रविनामे इत्यस्य लिट्प्रथमपुरुषैक-

वचनम् ।

३६ **उत्तीर प्राप्तुम् अपीपरत्**—तीरमुल्लङ्घ्य उत्क्रम्य वा इति उत्तीरम्, उत्कूलमित्यर्थ, प्राप्तुमुपसर्तुम् अपीपरत् अशक्नोत्। पॄ पूरणे इत्यस्य चौरादिकस्य लुङ्प्रथमपुरुषेकवचनम्। केचित्तु 'पार करोति पारयति' इत्येव व्युत्पादित 'पारि' इति नामधातु शकिसमानार्थमाहु । तस्मात् लुङ्प्रथमपुरुषैकवचनम् ।

" **स्वलोकोत्तरजीवितस्य**—लोकात् सामान्यजनात् इहलोकाद् वा ऐहिकजीवनात् इत्यर्थ, उत्तर उत्कृष्टतरमिति लोकोत्तरम्। स्व निज लोकोत्तरम् अ-लोकसामान्य जीवित जीवन तस्य।

" **वेदान्तविद्याविस्तारमहाव्रतम्**—वेदान्तस्य अद्वैतशास्त्रस्य या विद्या ज्ञान तस्या विस्तारस्य प्रसारस्य यत् महत् गुरु व्रत नियम तत् ।

" **भारतानुरक्तनिखिलनरवृन्दविदितम्**—भारते भारतदेशे अनुरक्ता अनुरागवन्त, भारतप्रेमिण इत्यर्थ, ये निखिला सकला नरा मनुष्या तेषा वृन्दस्य समूहस्य विदित ज्ञातम्।

" **महाभारताऽऽख्य कमनीयकाव्यम्**—महाभारतम् इति आख्या नाम यस्य तत्तथोक्तम्, कमनीय सुन्दर च तत् काव्यमिति कमनीयकाव्यम् ।

" **नातिचिरात् प्राक्**—अतिचिरमतिदीर्घकाल, तन्न भवति इति नातिचिरम्, तस्मात् नातिचिरात् अनतिदीर्घकालात् प्राक् पूर्वम्, अबहुकालपूर्वम् इति भाव । प्राक् इति दिक्शब्देन सह योगात् नातिचिरशब्दात् पञ्चमी।

" **अनुशीलयितुम्**—अध्येतुम् । अनुपूर्वात् शील उपधारणे इत्य-

स्माद् धातो तुमुन्।

३६ **त्रिदशभाषाभ्यासात्**–त्रिदशा देवा तेषा या भाषा भारती, सम्कृतभाषा इत्यर्थ, तस्या अभ्यास अनुशीलन तस्मात्।

" **सस्कृतसमाराधनतत्परा**–सस्कृत तन्नाम्ना प्रसिद्धा सुपरिष्कृता दैवी भाषा। 'सस्कृत नाम दैवी वागन्वाख्याता महर्षिभि.' इति दण्डी। तस्य यत् समाराधन सेवा स्वाध्यायपरिशीलनादिरूपा तस्मिन् तत्परा निरता।

" **अलङ्कर्मीणम्**–कर्मक्षमम्। 'कर्मक्षमोऽलङ्कर्मीण' इत्यमर। अल कर्मणे इति विग्रहे 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या' इति समासे 'अलङ्कर्मा' इति रूपम्। अलङ्कर्मा एव अलङ्कर्मीण। स्वार्थे खस्तद्धित।

" **अध्यायानपरिसङ्ख्येयाननुपूर्वश प्राकाश्यमानैषीत्**–परिसङ्ख्यातु गणयितुमशक्यान् अपरिसङ्ख्येयान्, अपरिमितान् इत्यर्थ, अध्यायान् परिच्छेदान् अनुपूर्वश पौर्वापर्येण, अनुक्रमेण इति यावत्, प्राकाश्यमानैषीत् प्रकाशितवान्, मुद्रयित्वा प्रचारितवान् इति भाव।

" **व्रते. स्वावधारिते**–स्वेन आत्मना अवधारितम् अवधार्य निश्चित्य वा गृहीत तस्मिन्, व्रते नियमे नियतकर्मणि इति यावत्।

" **नि शेषता गतमवेत्य**–नास्ति शेषोऽवशिष्टभाग यस्य तन्नि शेषम्, तस्य भावस्तत्ता ता, समाप्तिमिति यावत्, गत प्राप्तम् अवेत्य ज्ञात्वा। (सर्वमपि स्वधन) समाप्त विज्ञायेत्यर्थ।

" **वित्तवितरणक्षमम्**–वित्तस्य धनस्य वितरण प्रदान तत्र क्षम समर्थ तम्।

" **आसीसदत्**–आसादयत् प्रापद् वा। आङ षद पद्यर्थे इति

चौरादिकस्य धातोर्लुङ्प्रथमपुरुषैकवचनम् ।

३७ **पुरन्दरपुरातिथि**–पुरन्दरस्य इन्द्रस्य पुरम् नगरी, अमरावती इत्यर्थ, तस्य अतिथिरभ्यागत । स्वर्लोक गतो दिव गतो वेत्यर्थ ।

" **व्याधिव्यतिकरे**–व्याधि रोग एव व्यतिकर अवस्थाविशेष तस्मिन् ।

" **तद्व्रतपूर्तिचिन्तनैकचित्त**–तस्य व्रतस्य दृढनिश्चयस्य या पूर्ति सम्पादन तस्या यत् चिन्तन ध्यान तत्र एकचित्त एकाग्र ।

" **दु सहदेहदाहदह्यमानहृदयत्वात्**–देहस्य शरीरस्य दाहो देहदाह, दु सह सोढुमशक्यश्चासो देहदाह दु सहदेहदाह तेन दह्यमान भस्मीक्रियमाण हृदय यस्य स, तस्य भावस्तस्मात् ।

" **व्याहर्तुमनर्ह**–व्याहर्तु वक्तुम् अनर्ह अयोग्य अशक्तो वा ।

" **तीरयितव्यम्**–समापनीयम् । तीर कर्मसमाप्तौ इति चौरादिकाद् धातोस्तव्यप्रत्यय ।

" **स्नेहसान्द्रहृदय**–स्नेहेन प्रेम्णा सान्द्र प्रगाढ मसृण वा हृदय स्वान्त यस्य स ।

" **गभीरज्ञान च हृदयगममकार्षु**–गभीर गहन ज्ञानमिति गभीरज्ञानम् । तत्, हृदय गच्छतीति हृदयगमम्, 'खच्प्रकरणे गमे सुप्युपसख्यानम्' इति वार्तिकेन खच्, ततो मुमागम, तथाभूतमकार्षु कृतवन्त च । गहन ज्ञान सम्यक् अधिगतवन्तश्चेत्यर्थ ।

" **कर्मकुशलाध्यवसायतत्पराणाम्**–कर्मणि कार्ये कुशला चतुराश्च अध्यवसाये उत्साहे, महोद्योगे इति यावत्, तत्परा परायणाश्चेति तेषाम् । यद्वा, कर्मकुशलाश्च ते अध्यवसायतत्परा-

श्चेति तेषाम्।

३७ **अलन्तम**–अलमिति अव्यय सामर्थ्येऽर्थे। 'अल भूषणपर्याप्ति-शक्तिवारणवाचकम्' इत्यमर। बहूना मध्ये अतिशयेन अल समर्थ इति अलन्तम, समर्थतम इत्यर्थ, अतिशायने तमप्।

३८ **अरबवासिप्रबोधनसर्मापितसमस्तजीवित**–अरबेषु 'अरब'देशे वसन्तीति अरबवासिन तेषा प्रबोधन जागरणम्, तेभ्यो ज्ञानोपदेशवितरण वा तदर्थ सर्मापितम् उत्सृष्टम्, आहुतमिति यावत्, समस्त सपूर्ण जीवित जीवन येन स इति ईशदूत-मुहम्मदस्य विशेषणम्।

" **सुखसौहित्यसाधनरहित**–सुहित तृप्त, तस्य भाव सौहित्यम्। भावे ष्यञ्। सुखञ्च सौहित्य तृप्तिश्च तयो साधनै सामग्र्या रहित हीन, विवर्जित इति यावत।

" **व्यपनीतपर्याणम् विधाय**–व्यपनीतम् अपसारित, दूरीकृतमिति यावत्, पर्याण पल्ययन यस्मादेवभूत विधाय कृत्वा। स्व-मश्व विश्रमयितु तत्पर्याण तस्मादपसार्य इत्यर्थ।

" **विश्रान्त्यपेक्षम्**–विश्रान्ति विश्रामम् अपेक्षते आकाङ्क्षति इति तत् तथाभूतम् (स्वशरीरम्)। कर्मण्यण् इत्यण्।

" **वनायुवास्तव्यान्**–वनायुरिति अरबदेशनाम तस्य वास्तव्या निवासिन तान्।

" **अत्युच्चविचारर्चाचितचेतस्त्वात्**–अति अत्यधिकम् उच्चा उदात्ता, उन्नता इति यावत्, ये विचारा तै चर्चितम् अनुलिप्त सुर-भित वा चेत चित्त यस्य तस्य भाव तत्त्वम् तस्मात्।

३९ **प्रचुरैश्वर्यपरिवृता**–प्रचुर प्रभूत यत् ऐश्वर्य वैभव तेन परिवृता परितो वेष्टिता।

३९ **'वेषान्मे महिषीवृतात्** **'इति**—महाङ्गस्य उष्ट्रस्य, 'उष्ट्रे क्रमेलकमयमहाङ्गा' इत्यमर, त्वचा त्वचया, चर्मणा इति यावत्, विरचित निर्मित यत् बभ्रुरुचि बभ्रु (बभ्री वा) पिङ्गलवर्णा रुचि कान्तिर्यस्य तथाभूत चैल वस्त्र तत् मे मह्य महिषीवृतात् महिष्या कृताभिषेकया नृपस्त्रिया वृतात् वरणीयत्वेन गृहीतात परिहिताच्चेति भाव वेषात् तद्वेषापेक्षया इत्यर्थ, अतितरा बहुतर श्रीशालि श्रिया प्रभया शालते शोभते इति तच्छील भासते प्रतिभाति। बहुतरै अत्यधिकै विशालै विस्तीर्णै कोष्ठै कक्षै भृशम् अत्यन्त सुभूषितात् सुष्ठु अलङ्कृतात् प्रासादात् हर्म्यात् च तदपेक्षया च इत्यर्थ, वासाय निवासार्थम् अपि मे असौ सा उपकारिका राजयोग्य पटभवनम्, 'सौधोऽस्त्री राजसदनमुपकार्योपकारिका' इत्यमरवचनव्याख्याने क्षीरस्वामी,—उपक्रियते उपकरोति वा पटमण्डपादि राजसदनमिति। सुखतरा अतिशयेन सुखावहा भासते, भासते इति प्रथमपादस्थपदस्य काकाक्षिगोलकन्यायेन अत्राप्यन्वयो बोध्य, या उपकारिका मरौ मरुस्थले वितता विस्तृता भवतीति शेष ॥१॥

" **'मद्देशारब' इति**—चेत्यव्यय समुच्चयबोधकम्। तदत्र अस्य श्लोकस्य भाव पूर्वश्लोकभावेन सबध्नाति। मद्देशारबवस्त्रवेश्म मम देशो य 'अरब' इति नामा तस्य यत् वस्त्रवेश्म वस्त्रस्य वेश्म गृह, पटमण्डप इति यावत्, तत् परित अभित क्रीडत्किशोरा क्रीडन्त खेलन्त ये किशोरा बालाश्वा ते अमी, हि इति निश्चये, भूषाशालिसुपुष्टवेशरगणात् भूषया भूषणै शालन्ते शोभन्ते इति एवभूता

ये सुपुष्टा दृढा बलशालिनश्च वेशरा अश्वतरा तेषा गणात् यूथात्, समूहात् इति यावत्, अत्यततूर्णा अत्यधिक वेगशालिन सन्तीति शेष । आयान्तम् आगच्छन्त मनुष्य-मिति शेष, पश्यताम् अवलोकयता रक्षागुना रक्षाया गृहा-द्रिरक्षणस्य (कृते) ये श्वान कुक्कुरा तेपा सुभषण सुन्दर भषण, बुक्कनम् इत्यर्थ, तत् च, च इति समुच्चये, मा (कवयित्रीम्) शुद्धान्तसरक्षिण शुद्धान्तस्य अन्त पुरस्य स-रक्षिण रक्षकस्य, रक्षापुरुषस्येति यावत्, गजदन्ततूर्यनिनदात् गजस्य हस्तिनो दन्त गजदन्त तस्य तन्निर्मितमित्यर्थ यत् तूर्य तूरी, वाद्यविशेष इति यावत्, तस्य निनदात् निस्वनात् शब्दादित्यर्थ, श्रव्यतरम् अतिशयेन सुश्रव, मधुरमिति भाव भाति भासते ॥२॥ उभयोरपि श्लोकयो शार्दूलवि-क्रीडित वृत्तम् । तल्लक्षण तु—'सूर्याश्वैर्मसजस्तता सगुरव शार्दूलविक्रीडितम्' इति ।

४० **अदभ्रदर्पात्**—अदभ्र बहु, 'अदभ्र बहुल बहु' इत्यमर, दर्पो-ऽहङ्कार यस्मिन् तस्मात् ।

" **अद्यश्व**—अद्य वा श्व परदिने वा इति अद्यश्व, अद्यत्वे इत्यर्थ । सुपा इति सूत्रेण सुप्समास ।

" **समुन्मिषन्ती**—समुदीयमाना, जाग्रती इति यावत् । समुन्मिषति इति समुन्मिषन्, स्त्रिया समुन्मिषन्ती । सम्+उत्पूर्वात् मिष स्पर्धायामित्यस्मात् लट्, लट शतरि स्त्रियाम् 'उगितश्च' इति ङीप् ।

" **महार्घपरिबर्हक्रयसामर्थ्ये**—महान् अनल्प अर्घ मूल्य येषा ते तथाभूता ये परिबर्हा राजयोग्यद्रव्याणि, 'परिच्छदे नृपार्हेऽर्थे

परिवर्हे ' इत्यमर, तेपा क्रयम्य क्रयणस्य, मुद्रादिविनिमयेन ग्रहणस्येत्यर्थ, सामर्थ्य क्षमता तस्मिन् सत्यपि इत्यन्वयो वोध्य ।

४० **सुरुचिपूर्णोपकरणकलापाय**–शोभना रुचि सुरुचि, तया पूर्णानि यानि उपकरणानि सभारा तेपा कलाप समूहस्तस्मै। 'स्पृहेरीप्सित' इति सूत्रेण ईप्सितपदार्थस्य सम्प्रदानत्वात् सुरुचिपूर्णेत्यादिसमस्तपदाच्चतुर्थी ।

" **बाह्याडम्बरमात्रफलाय**–वाह्य वहिर्भव य आडम्वर सरम्भ, वैभवातिशयम्य प्रदर्शनमिति यावत्, 'आडम्वरोऽस्त्री सरम्भ' इत्यमर, तन्मात्र तत्प्रमाण फल प्रयोजन यस्य, तस्मै तथाभूताय। प्रमाणेऽर्थे मात्रच्प्रत्यय ।

" **विहितजीवितोत्सर्गा**–विहित कृत जीवितस्य जीवनस्य उत्सर्ग अर्पण यैस्ते तथोक्ता ।

" **अत्यवाहयन्त**–अयापयन्, अगमयन्। अतिपूर्वस्य वह प्रापणे इत्यस्य णिजन्तस्य आत्मनेपदे लङ्प्रथमपुरुषबहुवचनम्।

" **जगन्मङ्गलसाधनकारिताम्**–जगत ससारस्य यत् मङ्गल कल्याण तस्य साधन सपादन कर्तु शील यस्य तस्य भावस्तत्ता ताम्।

" **निष्कारणराशीकृतैश्वर्याणाम्**–निष्कारण नास्ति कारण यस्मिन् कर्मणि तद्यथा स्यात्तथा, निष्प्रयोजनमित्यर्थ, राशीकृत सचितम् ऐश्वर्य वैभव यैस्तेषाम्।

" **वृन्दिष्ठवेशभूषा-भुजिष्य-परिच्छदपरवशानाम्**–वृन्दिष्ठ भूयिष्ठ, बहुना समानार्थो वृन्दारकशब्द, तस्मात् अतिशायने इष्ठन्, यो वेश परिधानानि भूषा आभूषणानि भुजिष्या भृत्या परिच्छदा परिवर्हा, राजयोग्योपकरणानीति यावत्, तेषा

परवशा अधीनास्तेषाम् ।

४१ **प्रसन्नसारण्या**–प्रसन्ना निर्मला या सारणि (सारणी वा) लघुनदी तस्या ।

" **भोज्यजात निभालयन्**–भोज्याना भक्ष्यपदार्थाना जात समूह तत् निभालयन् पश्यन् ।

" **पिष्टकशकलानि**–पिष्टकाना तण्डुलपिष्टरचिताना पूपविशेषाणाम्, 'पूपोऽपूप पिष्टक स्यात्' इत्यमर, शकलानि खण्डानि ।

" **व्यपदेष्टुम्**–अभिधातुम्, नामविशेषेण आख्यातुम् । व्यपोपसृष्टात् दिश अतिसर्जने इत्यस्मात् तुमुन् ।

" **निजनि स्वतया**–निजा स्वकीया नि स्वता नास्ति स्व धन यस्य स नि स्व, तस्य भावस्तत्ता तया, स्वनिर्धनतया इति यावत् ।

" **बाह्यैश्वर्योपकरणसभारे**–बाह्यानि बहिर्भवानि, स्थूलानि इति यावत्, यानि ऐश्वर्याणि धनानि उपकरणानि साधनानि च तेषा सभार राशिस्तस्मिन् ।

" **पद सप्रतिपद्येते**–पद स्थान सप्रतिपद्येते गृह्णीत । सम्+प्रतिपूर्वस्य पद गतौ इत्यस्य लट्प्रथमपुरुषद्विवचनम् ।

४२ **वितर्कातिक्रान्तम्**–वितर्क सन्देहम् अतिक्रान्तम् अतीतम् इति क्लीबप्रथमैकवचनम् 'एतत्' इत्यस्य विशेषणम् ।

" **अशेषविधद्रव्यैश्वर्यराशिनिषेवि**–अशेषा सकला विधा प्रकारा येषु तानि तथोक्तानि द्रव्याणि पदार्था ऐश्वर्याणि धनानि च तेषा राशि सचय निषेवितु सेवितुम्, उपभोक्तुमिति यावत्, शील यस्य एवभूतम् ।

" **सनिर्बन्धम्**–निर्बन्ध आग्रह तेन सह यथा स्यात्तथा, साग्रहमित्यर्थ ।

४२ **उपनाथितव्यम्**–प्रार्थयितव्यम्। उपपूर्वात् नाथ याच्ञोपतापैश्वर्याशीःषु इत्यस्मात् तव्यप्रत्ययः।

" **सगीतिलेश**–सगीते सशयस्य लेश लव, सन्देहकणिका इत्यर्थ।

४३ **श्रपयित्वा**–पक्त्वा। श्रा पाके इत्यस्मात् स्वार्थणिजन्तात् क्त्वाप्रत्यय।

" **परिवेष्य**–भोजनमुपस्थाप्य। परिपूर्वात् विष सेवने इत्यस्मात् णिजन्तात् क्त्वाप्रत्यय। क्त्वो ल्यबादेश।

" **हितसाधनतया**–हितस्य कल्याणस्य साधन करण तस्य भाव तत्ता तया, हितकरतया इत्यर्थ।

" **विक्रयपरा**–विक्रय विपण, मुद्रादिद्वारा द्रव्यविनिमय इत्यर्थ, 'विपणो विक्रय' इत्यमर, तस्मिन् परा परायणा, निरता इति यावत।

४४ **नयनासेचनके चकासति चषके**–आ समन्तात् सिच्यतेऽनेन इति आसेचन, करणे ल्युट्, आसेचन एव आसेचनक, स्वार्थे क। नयनयो आसेचनक परितृप्तिकर, नयनाभिराम इत्यर्थ, 'तदासेचनक तृप्तेर्नास्त्यन्तो यस्य दर्शनात्', इत्यमर, तथाभूते चषके पानपात्रे चकासति दीप्यमाने सतीति शेष। चकासृ दीप्तौ इत्यस्मात् लट शत्रादेश। 'यस्य च भावेन भावलक्षणम्' इति सत्त्वलक्षणा सप्तमी।

" **तद्वर्तितरलद्रव्यम्**–तदिति पद चषक परामृशति। तस्मिन् वर्तितु शील यस्य तत् तथाभूत तरल द्रवरूपञ्च द्रव्य पदार्थ तत्।

" **अपि अभ्युपगच्छेम वय तेषा मतम्**–अपि इति कर्मप्रवचनीय सभावनायाम्। 'अपि पदार्थसभावनान्ववसर्गगर्हासमुच्चयेषु',

पा १ ४ ९६, 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि' इत्यमरश्च। वयमिति अस्मत्पदेन लेखिकाया श्रीमातु परामर्श। तेषा 'सुरापान न हानिकरम्' इति मन्यमानाना पुसा मत सिद्धान्तम् अभ्युपगच्छेम स्वीकुर्याम। अभ्युपपूर्वस्य गमेर्विधिलिङि उत्तमपुरुषबहुवचनम्। अयमर्थ — तेषा मत वय यथायुक्त मानयितु शक्नुम, किन्तु आसवस्य असेवनम् इत्यादिना अग्रिमवाक्येन सबन्धो योजनीय।

४४ **सदेहतुलामधिरोहतु प्रकामम्**—सदेह सशय एव तुला मापन, मापनयन्त्रमिति यावत्, ताम् अधिरोहतु आरोहतु प्रकाम यथेष्टम्, सन्देहदोलाया दोलायता काममिति भाव। अयमभिप्राय —सरक (मद्यपान) हितकरो न वेति विषय सन्दिग्धो भवतु नाम, किन्तु असुखकर सरकत्याग इत्यादि स्पष्टार्थमग्रे। अधे कर्मप्रवचनीयत्वात् 'कर्मप्रवचनीययुक्ते द्वितीया' इति तुलाशब्दात् द्वितीया।

" **दरीदृश्यन्ते**—पुन पुनरतिशयेन वा दृश्यन्ते। पौनपुन्ये द्योत्ये दृशेर्यङ। यङन्तात् तस्मात् कर्मणि यक्। लट्प्रथमपुरुषबहुवचनम्। हलो यमा यमि इति यङो यकारस्य लोप।

" **पानसयम-तदप्रसक्तिप्रसारयित्र्य**—पानस्य मदिरापानस्य सयम नियमन परिमितता वा, मितपानमिति यावत्। तदप्रसक्ति तस्मिन् पाने अप्रसक्ति अरति, मद्यस्य पूर्णनिग्रह इति यावत्। पानसयमश्च तदप्रसक्तिश्चेति तया प्रसारयित्र्य प्रचारयित्र्य।

" **अविदितप्रायम्**—प्राय विदितम् इति विदितप्रायम्। मयूरव्यसकादिवत् समास। तन्न भवति इति अविदितप्रायम्। नञ्तत्पुरुष। प्रायेण अज्ञातम् इत्यर्थ।

४४ **लोचनगोचरायते**–लोचनस्य लोचनयोर्वा गोचर इति लोचनगोचर, नयनविषय इत्यर्थ । स इवाचरति इति लोचनगोचरायते, प्रत्यक्षीभवतीत्यर्थ । आचारार्थ क्यङ। लट्-प्रथमपुरुषैकवचनम् ।

४५ **मनोवाक्कायशक्तिविनाशकारिणी**–मनश्च वाक्च कायश्चेति मनोवाक्काया । चार्थे द्वन्द्व । तेषा मनोवाक्कायाना मनोवाणीशरीराणा या शक्ति सामर्थ्य तस्या विनाश क्षय कर्तु शीलमस्या एवभूता ।

" **जनताजनार्दनसेवाव्रतेन**–जनाना समूहो जनता। समूहार्थे तल्। सा एव जनार्दन विश्वम्भरो विष्णु तस्य सेवा एव व्रत नियमो यस्य तेन तथोक्तेन। यद्वा, जनताया जनसमूहे, तदन्तरे इति यावत्, यो जनार्दन परमेश्वर तस्य या सेवा जनसेवाद्वारेण तत्सेवेति भाव, सैव व्रत नियमो यस्य एवविधेन ।

" **व्यङ्गताम्**–विगत विनष्ट वा अङ्ग यस्य स व्यङ्ग, तस्य भावस्तत्ता ताम्। 'गत'पदस्य 'नष्ट'पदस्य वा पाक्षिको लोप । हीनाङ्गता विकलाङ्गता वा इत्यर्थ ।

" **प्रस्तुवन्ति सीताम्**–सीता लाङ्गलपद्धति, हलरचिता रेखा इति यावत्, 'सीता लाङ्गलपद्धति' इत्यमर । ता प्रस्तुवन्ति विरचयन्ति। प्रपूर्वात् स्तौतेर्लट्।

" **वीर्याय सयता स्यात**–वीर्य रेत अतिशक्तिभाक् उत्साहो वा येन नरोऽसाध्यसाधनेऽप्युद्यतो भवति, 'उत्साहोऽध्यवसाय स्यात् स वीर्यम् अतिशक्तिभाक्' इत्यमर, तस्मै तल्लब्धुमित्यर्थ, तुमुन्नर्थे चतुर्थी। सयता सयमवन्त, सपूर्वाद्

यम उपरमे इत्यस्मात् निष्ठा। स्यात भवन।

४५ **भोज्याभोज्ये परीक्षस्व पेयापेये तथैव च**–भोक्तु योग्य भोज्य खाद्यम्, तच्च अभोज्यम् अखाद्यञ्चेति ते परीक्षस्व परित ईक्षस्व परीक्ष्य विविच्य च सेवस्व इति भाव। तथैव तेनैव प्रकारेण च, पेय पातु योग्य द्रव्य, अपेय पानायोग्य द्रव्यञ्च परीक्षस्व।

४६ **शर सम्प्रेष्य विध्यति शरव्य तस्मिन्नार्यतरुणे**–तस्मिन् प्रसिद्धे। अत्र 'तत्'पदस्य प्रसिद्धार्थत्वान्न यच्छब्दापेक्षा। तदुक्त काव्यप्रकाशे–'प्रक्रान्तप्रसिद्धाऽनुभूतार्थविषयस्तच्छब्दो यदुपादान नापेक्षते' इति। आर्य एतज्जातीय, श्रेष्ठ प्रकृताचारनिष्ठो वा। 'तिष्ठति प्रकृताचारे स वा आर्य इति स्मृत'। आर्यश्चासौ तरुण युवा चेति तस्मिन्, शर बाण सम्प्रेष्य निक्षिप्य, सम्+प्रपूर्वात् इष गतौ इत्यस्माद् धातो णिजन्तात्, प्रेषृ गतौ इत्यस्माद् वा सपूर्वात् क्त्वाप्रत्यय, शरव्य लक्ष्यम्, शरुशब्दात् शरशिक्षार्थकात् हितार्थे यत्, विध्यति निर्भिन्दति सति इति शेष। व्यध ताडने इत्यस्मात् लट शतरि सप्तम्येकवचनम्।

" **नाय दशरथस्य तुला बिभर्ति**–अयमिति 'इदम्'पदेन प्रकृत आर्यतरुण परामृश्यते। अय तरुण दशरथस्य तन्नाम्न प्रसिद्धस्य राज्ञ तुला सादृश्य न बिभर्ति न धारयति, तस्य सादृश्य नोपयाति, तत्सदृशो न भवतीत्यर्थ।

" **किमाकूतमेतस्य**–एतस्य अस्य "स हि शब्दवेधी" इत्येवरूपस्य पूर्वोक्तवचनस्य, 'समीपतरवर्ति चैतदो रूपम्' इति स्मरणात् समीपतरवचनस्य परामर्श, आकूतम् अभिप्राय किं कि-

स्वरूपमित्यर्थ । अस्य भवद्वचनस्य कोऽभिप्राय इत्यर्थ ।

४६ **स्पष्टप्रत्यूषे**—स्पष्ट व्यक्त, समुज्ज्वल इति यावत्, प्रत्यूष प्रभातम् तस्मिन्। सुस्पष्टे दिनज्योतिषि इत्यर्थ ।

" **कर्णाकर्णिक्या**—कर्णात् कर्ण गाति वार्ता यया क्रियया सा कर्णाकर्णिका तया, श्रोत्रपरम्पर्या इत्यर्थ । 'एहीडादयोऽन्यपदार्थ' इत्यनेन वार्तिकेन 'कर्णाकर्णिका' इति समस्तपद निपातनीयम् ।

" **शब्दवेधवैदग्धीगर्वित**—शब्दानुसारी वेध इति शब्दवेध, मध्यमपदलोपी समास । यद्वा, शब्देन द्वारेण वेध इति शब्दवेध, शब्दानुसारेण लक्ष्यस्य वेधनमित्यर्थ । तत्र विषये या वैदग्धी चातुरी, विदग्धशब्दात् भावे ष्यञ्, षित्त्वाद् ङीप्, तया हेतुभूतया गर्वित दृप्त ।

४७ **स्तम्बनिवहान्तराले**—स्तम्बाना गुल्माना यो निवह समूह तस्य अन्तराल मध्य तस्मिन्, गुल्मजालाभ्यन्तरे इत्यर्थ ।

" **कालकलया**—कालस्य समयस्य या कला सूक्ष्मभागविशेष, घटिका इति यावत्, तया। 'अपवर्गे तृतीया' इत्यनेन फलप्राप्तौ गम्यमानाया कालाध्वनोरत्यन्तसयोगे तृतीया।

" **कस्यापि प्रसर्पणरवस्तत्कर्णगोचरो जज्ञे**—कस्यापि कस्यचित् अज्ञातजातिविशेषस्य जन्तो प्रसर्पणस्य चलनस्य य रव शब्द, ध्वनिरिति यावत्, तस्य कर्ण इति तत्कर्ण तस्य गोचर प्रत्यक्ष जज्ञे जात, सवृत्त इति यावत्। कस्यचिज्जन्तो पदध्वनि स शुश्राव इत्यर्थ ।

" **अन्धतमसत्वात्**—अन्ध तम इति अन्धतमसम्। 'अवसमन्धेभ्यस्तमस' इत्यनेन समासान्तोऽच्प्रत्यय । तस्य भाव

अन्धतमसत्वम्, भावे त्व, तस्मात्। घनान्धकारतया इत्यर्थ ।

८७ **सुप्रयुक्तशर**—सुप्रयुक्ता सुष्ठु व्यापारिता शरा बाणा यस्य स, सुप्रयोगविशिख, शरनिक्षेपनिष्णातो वेत्यर्थ । तथा चामर—'कृतहस्त सुप्रयोगविशिख कृतपुङ्खवत्'।

" **शब्दवेधी**—शब्दमनु व्यद्धु शीलमस्येति शब्दवेधी। ताच्छील्ये णिनि । वेध्यगतशब्दानुसारेण तद्वेधने निष्णात इत्यर्थ । यो धनुर्धरो हि अगोचरस्य वेध्यस्य शब्दमात्र निशम्य तमनु शर विमुच्य तद्विध्यति स शब्दवेधी इत्यभिधीयते।

" **मुक्तमात्रे**—मुक्त एवेति मुक्तमात्र, तस्मिन्। मुक्ते सत्येव इत्यर्थ । मयूरव्यसकादयश्चेति समास । मात्रशब्दोऽत्र अवधारणार्थक, 'मात्र कात्स्न्र्येऽवधारणे' इत्यमर, तेन सह नित्यसमासत्वात् अस्वपदविग्रहो दर्शित ।

" **मानुष सारुषमकार्षम्**—मानुष मनुष्य सारुषम् अरुर्व्रण तेन सह वर्तते इति सारु तम्, विक्षतमित्यर्थं, अकार्ष कृतवान्। करोतेर्लुङ।

" **पूरणीयकलशपाणिम्**—पूरणीय पूरयितु योग्य कलश घट पाणौ हस्ते यस्य त तथाभूतम्।

" **विचेष्टमानम्**—विचेष्टते इतस्ततो विलुठति इति विचेष्टमान तम्, विपरिवर्तमानमिति यावत्। विपूर्वात् चेष्ट चेष्टायाम् इत्यस्मात् लट्, लट शानच्।

" **करुणकाहलेन स्वरेण**—करुण दीन, कातर इति यावत्। काहल भृश शुष्को वा, 'काहल भृशशुष्कयो' इति विश्व । करुणश्चासौ काहलश्चेति तेन तथाविधेन स्वरेण कण्ठध्वनिना।

४७ **प्राणान्तक**—अन्त करोति अन्तयति। अन्तयतीनि अन्तक, 'अन्ति' इनि नामधातो कर्तरि ण्वुल्। प्राणानाम् अन्तक अन्तकर, विनाशक इति यावत्।

,, **दृष्टिविकलौ**—दृष्टचा दर्शनशक्त्या विकलौ विहीनौ इति दृष्टिविकलौ, प्रज्ञाचक्षुषौ अन्धौ वेत्यर्थ ।

,, **यथावृत्तम्**—वृत्त वृत्तान्तम् अनतिक्रम्येति यथावृत्तम्, यथाभूत यथाघटित वेत्यर्थ । 'यथा'पदमत्र पदार्थानतिवृत्तिवाचकम्।

४८ **कीर्तिशेषतामयासीत्**—कीर्ति यश शेषा अवशिष्टा यस्य तस्य भावस्तत्ता ताम्, नामशेषता मृत्यु वेत्यर्थ, अयासीत् प्राप्नोत्। या प्रापणे (प्रापण गति) इत्यस्य लुङ्प्रथमपुरुषैकवचनम्। तस्य यश शरीरमेव अवशिष्टम्, स्थूलदेहस्तु पञ्चतामगात् इति भाव ।

,, **म्रियमाणकुमारप्रदर्शितपथेन**—म्रियमाण मरणासन्न य कुमार श्रवणकुमार तेन प्रदर्शित सकेतित य पन्था मार्ग तेन। 'ऋक्पूरब्धू पथामानक्षे' इत्यनेन समासान्त 'अ'प्रत्यय ।

,, **श्रवणपर्णशालापरिसरम्**—श्रवणस्य श्रवणकुमारस्य या पर्णशाला कुटी तस्या य परिसर पर्यन्तभू, प्रान्तभूमिरिति यावत् तम्।

,, **धनुर्विद्यावलिप्त**—धनुष तत्प्रयोगस्य इत्यर्थ, धनुषा शरनिक्षेपस्य इति यावत्, या विद्या कला तया हेतुभूतया अवलिप्त गर्वित ।

,, **मन्त्रानामनन्तौ**—मन्त्रान् अन्त्येष्टिसस्कारार्थं विनियुक्ता ऋच इत्यर्थ, आमनन्तौ जपन्तौ। आङ्पूर्वात् म्ना अभ्यासे इत्य-

स्मात् लटं शत्रादेश, तत प्रथमाद्विवचनम्।

४८ **स्ववत्सलसुतनिमित्तम्**—स्व निजश्चासौ वत्सल प्रियश्च य सुत पुत्र स निमित्त यस्मिन् कर्मणि तद्यथा स्यात्तथा। निजप्रियपुत्रस्य हेतो इति भाव ।

,, **प्रियतनयकृते**—प्रिय वत्सल य तनय पुत्र तस्य कृते हेतो । कृते इति विभक्तिप्रतिरूपकमव्यय निमित्तार्थे वर्तते।

,, **बहुसवत्सरानन्तरम्**—बहव प्रभूता, बहुसख्याका इति यावत्, सवत्सरा वर्षाणि तेभ्य तेषा वा अनन्तर पश्चात् यथा स्यात्तथा।

,, **मृतस्य अन्त्येष्टिकृत्याय**—मृतस्य दिवङ्गतस्य अन्त्येष्टि अन्त्या अन्तिमा, मृत्योरनन्तर क्रियमाणा इत्यर्थ, इष्टि यज्ञ, तन्नामा सस्कारविशेष इति यावत्, तस्या कृत्य क्रियाकलाप तस्मै।

४९ **व्यतीते बहुतिथे काले**—बहूना (दिन-मासादीनाम्) पूरण बहुतिथ। पूरणार्थे डट् तिथुगागमश्च। तथाभूते काले समये व्यतीते गते सतीति शेष। दीर्घकाले व्यतीते सतीत्यर्थ।

,, **पङ्क्तिरथ**—दशरथ, पक्तिशव्दस्य दशसख्यापर्यायित्वात्। 'पङ्क्तिविशति ' इत्यादिसूत्रेण पक्तिशब्दो दशसख्याया निपातित। तथा चामर—'पङ्क्ते शतसहस्रादि क्रमाद् दशगुणोत्तरम्'।

,, **साकेतसिंहासनम्**—साकेतम् अयोध्या। 'साकेत स्यादयोध्याया कोसलानन्दिनी तथा' इति यादव। तस्य सिंहासन राजासनम्।

,, **अजीजनत्**—अजनयत्, उत्पादितवान्। जनी प्रादुर्भावे इत्य-

स्मात् णिजन्तात् लुङ्, प्रथमपुरुषैकवचनम्।

४९ **अगीयत**–गीयते स्म, कीर्त्यते स्म। गै शब्दे इत्यस्य कर्मणि लङ्प्रथमपुरुषैकवचनम्।

" **दाशरथिश्चतुर्दशवर्षवनवासाय सम्प्रेषयाम्बभूवे**–दशरथस्यापत्य दाशरथि, श्रीरामचन्द्र इत्यर्थ। दशरथशब्दात् अपत्यार्थे इञ्। चतुर्दशाना चतुरुत्तरदशसख्याकाना वर्षाणा वनवास वनेऽरण्ये निवास तस्मै सप्रेषयाम्बभूवे प्रेषित। सम्+प्रपूर्वस्य इष गतौ इत्यस्य णिजन्तस्य कर्मणि लिट्प्रथमपुरुषैकवचनम्।

" **पल्वलप्रान्तपरित्यक्तासवे**–पल्वल जलाशय तस्य प्रान्ते परिसरे, पर्यन्तभूमौ इति यावत्, परित्यक्ता विसर्जिता असव प्राणा येन तस्मै।

" **स्वशब्दानुपातिशरवेधनैपुण्या**–स्वे निजा शब्दानुपातिन शब्दमनु, शब्दानुसारेण इत्यर्थ, पतन्ति इति ते तथोक्ता ये शरा बाणा तै यो वेध लक्ष्यवेधन तस्य नैपुणी नैपुण्यम्, चातुर्यमिति यावत्, तया। निपुणशब्दात् भावे ष्यञ्, षित्त्वाद् ङीष्।

" **तस्मिन् दूरदर्शिता लेशमात्रमपि नावाशिष्यत**–तस्मिन् दशरथे दूरदर्शिता दूर द्रष्टु शील यस्य तस्य भाव तत्ता, समीक्ष्यकारिता दीर्घदृष्टिर्वेत्यर्थ, लेशमात्रमपि लेश लव प्रमाणमस्येति लेशमात्रम् तद्यथा स्यात्तथा, किञ्चिन्मात्रमपीत्यर्थ। प्रमाणेऽर्थे मात्रच्। न अवाशिष्यत अवशिष्टा नाभूत्। अवपूर्वात् शिष असर्वोपयोगे इत्यस्माच्चौरादिकात् कर्मकर्तरि लङ्।

४९ **ज्वलत्येव सवितरि**—सवितरि सूर्ये ज्वलति देदीप्यमाने सत्येव। भानौ नभोमध्यमविरूढे सत्येव इति भाव । भावलक्षणा सप्तमी।

" **शब्दवेधवैदग्ध्यमदान्धतायाः साधीयः समपत्स्यत**—शब्देन शब्दानुसारेण यो वेध लक्ष्यवेधन तस्य यद् वैदग्ध्य चातुर्य तस्य मदेन गर्वेण हेतुना या अन्धता अन्धभाव, अविवेकिता इत्यर्थ, तस्या तदपेक्षया साधीय साधुतर समपत्स्यत अभविष्यत्। सपूर्वात् पद गतौ इत्यस्मात् हेतुहेतुमद्भावे लृङ्।

" **सोऽनपचिकीर्षुरप्यविमृश्यकारी**—अपकर्तुमिच्छुरपचिकीर्षु । स न भवतीति अनपचिकीर्षु । अपपूर्वात् करोतेरिच्छाया सन्। सन्नन्तात् उप्रत्यय । 'अपचिकीर्षु'शब्दस्य नञा सह समास । अनपचिकीर्षु अपि अपकारेच्छारहितोऽपि स दशरथ अविमृश्यकारी अविमृश्य अविचार्य करोति इति तथाभूत, अविवेकी इति भाव, आसीत् इति शेष ।

" **पशुश्मशानाहृतानि**—शवाना शयन श्मशानम्। पशूना गोवृषभादीना यत् श्मशान तस्मात् आहृतानि आनीतानि।

५० **हस्तयित्वा**—हस्ते कृत्वा, स्वायत्तीकृत्य इत्यर्थ । हस्तशब्दात् 'तत्करोति तदाचष्टे' इति णिच्। ततो 'हस्ति' इति णिजन्तान्नामधातो क्त्वाप्रत्यय ।

" **मनस्यकुरुताम्**—मनसि चित्ते अकुरुता दृढ धृतवन्तौ। मतिम् अकुरुता, निश्चय कृतवन्तौ वेति भाव ।

" **अप्रयुञ्जान**—प्रयुङ्क्ते इति प्रयुञ्जान । न प्रयुञ्जान इत्यप्रयुञ्जान, प्रयोग न कुर्वन्नित्यर्थ । प्रपूर्वात् युजिर् योगे

इत्यस्मात् आत्मनेपदे लट्, लट शानच्। ततो नञ्तत्पुरुष ।

५० **अविपणमान**–विपणते इति विपणमान, स न भवतीत्यविपणमान अविक्रीणान, विक्रय न कुर्वन् इत्यर्थ । विपूर्वात् पण व्यवहारे इत्यस्मात् लट्, लट शानच्। ततो नञ्समास ।

" **पाशा प्रास्तारिषत**–पाशा जालानि प्रास्तारिषत प्रस्तारिता, विस्तारिता इति यावत्। प्रपूर्वस्य स्तॄ आस्तरणे इत्यस्य कर्मणि लुङ्प्रथमपुरुषबहुवचनम्।

" **तयोरन्यतर किल न्यपप्तत्**–तयो गृध्रयो अन्यतर एकतर अन्यतमे एकतमस्मिन् पाशे जाले न्यपप्तत् निपतित । निपूर्वात् पततेर्लुङ्। किलेति प्रसिद्धौ।

" **प्रस्तुतश्च .. तत्तदधिपेभ्य**–तानि वस्त्राणीत्यर्थ तत्तदधिपेभ्य. तानि च तानि चेति तत्तानि तेषाम् अधिपा स्वामिन तेभ्य प्रतिदातु प्रत्यर्पयितु प्रस्तुत सज्जश्च अस्मीति शेष ।

" **स्वकीय कृतवेदित्वमावेदयितुम्**–स्वमेव स्वकम्। स्वार्थे क । स्वकस्येद स्वकीयम्, तस्येदमित्यर्थे छ । स्वकीय निज कृतवेदित्व कृतमुपकृतम्, उपकारमिति यावत्, वेत्तीति कृतवेदी कृतज्ञ इत्यर्थ, तस्य भावस्तत्त्वम् आवेदयितु ज्ञापयितुम्।

५२ **शकलीकरणम्**–शकल खण्डम्। अशकल शकल सपद्यते, तत्करोति शकलीकरोति, तथाकरण शकलीकरण खण्डीकरणमित्यर्थ ।

" **तत्परामर्शपारितोषिकमिव प्रदित्सन्**–तस्य वृकस्य य परामर्श सम्मति तस्य पारितोषिक पुरस्कार प्रदित्सन् प्रदातुमिच्छन् इव। प्रपूर्वाद् ददाते सन्, सन्नन्ताद् धातो लट शत्रादेश ।

५२ **भूयिष्ठांशभाक्**—अयमेषामतिशयेन बहुरिति भूयिष्ठः। बहु-शब्दात् अतिशायने इष्ठन्। भूयिष्ठं बहुतमं यः अंशं भागं तं भजति सेवते, प्राप्नोतीत्यर्थः, सः। 'भजो ण्विः' इति ण्विप्रत्ययः।

" **विवेकौचित्योपचिता**—विवेकः सदसद्विवेचनम्। औचित्यमौचिती, उचितत्वमिति यावत्। विवेकश्च औचित्यञ्चेति ताभ्याम् उपचिता संभृता, संयुक्ता इति यावत्।

५३ **समर्हतितराम्**—सम्यगर्हति योग्यो भवति इति समर्हति। द्वाविमौ समर्हतः, अयमनयोरतिशयेन समर्हति इति समर्हतितराम्। 'समर्हति'पदात् द्वयोरेकस्यातिशये तरप्। 'किमेत्तिङव्यय-घादाम्वद्रव्यप्रकर्षे' इति तरबन्तात् आमुप्रत्ययः।

" **यहूदीयपवित्रपत्तन'यरुशलम'शासकस्य**—यहूदिनां तज्जातीयाना-मिदमिति यहूदीयम्। यहूदीयं च पवित्रं पावनं च यत् पत्तनं नगरं तदेव यरुशलमम् एतदाख्यं तस्य शासको राजा तस्य।

" **प्रासीसरन्**—प्रसारयन्ति स्म। प्रपूर्वस्य सृ गतौ इत्यस्य णिज-न्तस्य लुङ्प्रथमपुरुषबहुवचनम्।

" **एतत्समतिरिक्तम्**—एतस्मात् अस्मात् समतिरिक्तं समधिकं यथा स्यात्तथा।

" **सुविस्मयावहम्**—विस्मयमाश्चर्यमावहति प्रापयतीति विस्मयावहः। सु सुतरामतिशयेन वा विस्मयावहः इति सुविस्मयावहः तम्।

" **गारुत्मतपद्मरागप्रभृतिरत्नराजिविराजितम्**-गारुत्मतानि हरि-न्मणयः, पद्मरागाः शोणरत्नानि। गारुत्मतानि च पद्मरागा-श्चेति गारुत्मतपद्मरागाः। ते प्रभृतयः आदयः प्रधाना-

नीत्यर्थ येषा तानि गारुत्मतपद्मरागप्रभृतीनि। तानि च रत्नानि चेति गारुत्मतपद्मरागप्रभृतिरत्नानि, तेषा या राजिरावलि, समूह इति यावत्, तया विराजित शोभितम्। प्रभृति (पुल्लिङ्ग) तदादौ इति, प्रभृति (अव्ययम्) तदादौ इति च शब्दार्थचिन्तामणि।

५४ **मणिमाणिक्यमुक्ताफलफलिता**—मणय रत्नानि च माणिक्यानि पद्मरागाश्च मुक्ताफलानि मौक्तिकानि चेति तै फलिता फलवन्त।

" **हिरण्मयगृध्रौ**—हिरण्यस्य विकार हिरण्मय। हिरण्यशब्दात् विकारार्थे मयट्। 'दाण्डिनायनहास्तिनायन०' इत्यादिसूत्रेण यादिलोपो निपात्यते। हिरण्मयो सुवर्णमयौ गृध्रौ' इति हिरण्मयगृध्रौ। विशेषण विशेष्येण बहुलमिति समास।

" **भद्रासनमुभयत**—भद्रासन नृपासनम्, 'नृपासन यत्तद् भद्रासन सिंहासन तु तत्' इत्यमर। तद् उभयत तस्य उभयो पार्श्वयोरित्यर्थ। 'उभसर्वतसो कार्या धिगुपर्यादिषु त्रिषु। द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते' इत्यनेन षष्ठ्यर्थे द्वितीया।

" **व्यवहारस्थितिम्**—व्यवहारस्य विवादस्य, ऋणदानादिनिमित्तकस्य विविधवादस्येति भाव, 'विवादो व्यवहार स्यात्' इत्यमर, स्थिति मर्यादा ताम्। 'मर्यादा धारणा स्थिति' इत्यमर।

" **सन्ततोपतापि**—सन्तत सतत, निरन्तरमित्यर्थ, उपतापयति पीडयतीति तत्। ताच्छील्ये णिनि। सदादु खदायि इति भाव।

" **सत्यविसवादि**—सत्यात् विसवदितु विपर्येतु, विरुद्धीभवितुमिति यावत्, शीलमस्येति सत्यविसवादि। विसपूर्वाद्वदते

ताच्छील्ये णिनि। स्वभावत एव सत्याद् विमङ्गतम् इत्यर्थ।

५५ **अध्यापकप्राड्विवाकयो**–अध्यापयतीति अध्यापक शिक्षक इत्यर्थ। अधिपूर्व इङ्धातुरध्ययने वर्तते, तस्माण्णिजन्तात् कर्तरि ण्वुल्। प्राड्विवाक अक्षदर्शक, वाक्कील इति यावत्, 'प्राड्विवाकाक्षदर्शकौ' इत्यमर। अध्यापकश्च प्राड्-विवाकश्चेति तयो।

" **शुचिपुरुषोचितत्वात्**–शुचि पवित्रो य पुरुषो नर तस्य उचित योग्यम्, तस्य भावस्तत्त्व तस्मात्।

" **भृशमभियातोऽपि चाभीलैर्यथाभूतमभिधत्ते**–आभीलै कष्टै, 'स्यात्कष्ट कृच्छ्रमाभीलम्' इत्यमर, भृश निरन्तरम् अभि-यातोऽपि आक्रान्त सन्नपि यथाभूत भूत वृत्तमनतिक्रम्य, यथातथमित्यर्थ, अभिधत्ते कथयति। नितरा पीडितोऽपि सत्यमेव वदति इति भाव।

" **प्रभूतैश्वर्यराशिसमाश्रय**–प्रभूत प्रचुरम्, अत्यधिकमिति यावत्, यत् ऐश्वर्य वैभव तस्य यो राशि पुञ्ज तस्य समाश्रय आधार। विपुलधनवैभवसमन्वित इत्यर्थ।

" **ब्राह्मणवर्ण . निरचैषीत्**–ब्रह्म वेद शुद्ध चैतन्य वा, तद् अधीते वेत्ति वा इति ब्राह्मण। तस्य यो वर्ण त प्रवि-विक्षु प्रवेष्टुमिच्छु, प्रपूर्वाद् विशतेरिच्छार्थे सन्, तत उप्रत्यय, तपश्चर्या तपस्याम् आचरितु कर्तु निरचैषीत् निश्चय चकार। निर् इत्येवपूर्वात् चिनोते परस्मैपदे लुङ्।

" **कर्मकलापमात्ययिकमशेषतोऽनुतिष्ठन्**–अत्यय कार्यस्यावश्यम्भावे इति शब्दार्थचिन्तामणि। अत्यय प्रयोजनमस्येति आत्य-

यिकम् अवश्यकर्तव्यम् इत्यर्थ । (प्रयोजन फल कारण च)। 'प्रयोजनम्' इति सूत्रेण ठञ्। कर्मकलाप कर्मणा कार्याणा कलाप समूहस्तम् अशेषत अशेषेण, 'आद्यादिभ्य उपसख्यानम्' इति वार्तिकेन तसि, अनुतिष्ठन् कुर्वन्। अनुपूर्वात् तिष्ठतेर्लट शत्रादेश ।

५५ . . **इति सननर्त गी रसनाग्ररङ्गे नरगणस्य**—इति इय पूर्वोक्ता गीर्वाणी नरगणस्य नराणा मनुष्याणा गण समूहस्तस्य, जनसमाजस्येति यावत्, रसनाग्ररङ्गे रसनाया जिह्वाया अग्रमग्रभाग एव रङ्ग रङ्गभूमि तस्मिन् सननर्त नृत्यति स्म, सर्वस्यापि रसनाग्रे गीरिय ललासेत्यर्थ ।

" **रोषावेशविवश**—रोषस्य क्रोधस्य य आवेश आवेग तस्य विवश अधीन, कोपाविष्ट इति यावत्।

" **दारुणदु खासिकादष्ट**—दारुणा भयानका या दु खासिका दु ख-मास्ते अस्यामिति सा, चिन्तेत्यर्थ, तया दष्ट प्रहृत, पीडित इति यावत्।

" **विशसितुम्**—हिसितुम्, हन्तुमित्यर्थ । विपूर्वात् शसु हिसायाम् इत्यस्मात् तुमुन्।

" **व्यवससौ**—व्यवसितवान्, निश्चय चकारेत्यर्थ । व्यवपूर्वात् षोऽन्तकर्मणि इत्यस्मात् लिट्, प्रथमपुरुषैकवचनम्।

" **तद्द्वारमारादुपगतश्च**—तस्या वसिष्ठपर्णशालाया द्वारम् इति तद्द्वारम्। तत् आरात् समीपे यथा स्यात्तथा उपगत प्राप्तश्च। 'आराद् दूरसमीपयो' इत्यमर । अत्र 'द्वार'-पदम् 'उपगत' इति क्रियाया कर्म, न तु तस्य 'आरात्' इति पदेन योग । अतश्च 'अन्यारादितरर्ते ' इत्यादि-

सूत्रेण पञ्चमी न। 'तमर्च्यमारादभिवर्तमानम्' 'विशाम्पति-
र्विष्टरभाजमारात् कृताञ्जलि कृत्यविदित्युवाच (रघु २
१०, ५ ३) इति कालिदासकृतप्रयोगवत् अत्रापि अर्थ-
योजना कल्पनीया।

५५ **श्रुतिमुपगते स्वीयव्यपदेशे**–स्वस्याय स्वीय निज इत्यर्थ, यो व्यपदेश नाम तस्मिन् श्रुति श्रोत्रम् उपगते प्राप्ते। स्व-नाम्नि श्रुतिपथ प्राप्ते श्रुते वा सत्येव इत्यर्थ ।

" **क्षमातिशयशालिनीम्**–क्षमा इति एतन्नामा प्रसिद्धो गुण, क्षाति सहिष्णुता वेत्यर्थ । क्षमाया अतिशय आधिक्यमिति क्षमातिशय । तेन शालते शोभते इति तच्छीलाम्। ताच्छील्ये णिनि, नान्तत्वात् स्त्रिया ङीप्।

५६ **अन्वरौत्सीत**–अन्वरुध्यत, अनुरोधमाग्रह वा अकरोत्। अनु-पूर्वात् रुधिर् आवरणे इत्यस्मात् परस्मैपदे लुङ, प्रथम-पुरुषैकवचनम्।

" **समुपात्तविप्रतीसार**–सम्यक् उपात्त समुपात्त सम्यक् गृहीत, स्वीकृतो वेत्यर्थ, विप्रतीसार पश्चात्तापो येन स तथोक्त । 'पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि' इत्यमर ।

" **विद्वेषशून्यम्**–विशेषो द्वेष विद्वेष वैरमिति यावत्, तेन शून्य रहित यथा स्यात्तथा। निर्वैरमित्यर्थ ।

" **निर्विशङ्कम्**–विशेषा शङ्का विशङ्का। निर्नास्ति विशङ्का यस्मिन् कर्मणि तद्यथा स्यात्तथा। नि शङ्क निर्भय वेत्यर्थ । निर्गता विशङ्का यस्मात् कर्मण तद्यथा स्यात्तथा इति वा विग्रह कार्य ।

" **स्वैरमापतन्तीष्वपि विपत्सु**–विपत्सु विपत्तिषु स्वैर काम, यथे-

च्छम् इनि यावत्, 'मन्दस्वच्छन्दयो स्वैर' इत्यमर, आपतन्तीषु आगच्छन्तीष्वपि। सर्वा अपि विपदोऽवगणय्य तृणीकृत्य वेत्यर्थ ।

५६ **इत्थ विपद . जगति**—इत्थमनेन प्रकारेण विपद विपत्ती प्रतियुध्यमानाना प्रतिकुर्वता पुसा मनुष्याणा च जगति ससारे आपाताऽशुभानि अपि आपातत आरम्भत प्रथमतो वा अशुभानि अमङ्गलानि अपि भद्रतराणि अतिशयेन भद्राणि कल्याणकराणि परिणमन्ति फलन्ति दृश्यन्ते विलोक्यन्ते। अय भाव—ये जना अनया (निर्दिष्टया) रीत्या विपदा प्रतिकार कुर्वन्ति तेषा यद्यपि आरम्भे अमङ्गल घटमान विलोक्यते तथापि अन्ते मङ्गलमेव जायते इति भूयो भूयो निभाल्यते भुवने।

" **समाप्तकल्पे**—ईषदून (यथा स्यात्तथा) समाप्त, प्रायेण समाप्तो वेति समाप्तकल्प, तस्मिन्। समाप्तप्राये इत्यर्थ, प्रायेण समाप्ते ईषदेव असमाप्ते इति भाव। 'ईषदसमाप्तौ कल्पब्देश्यदेशीयर' इति कल्पप्प्रत्यय।

" **ततश्च शिबिकाया सरभसमुपासर्पत्**—तत दनन्तर च सुमहान् सुतरा महान्, विशाल इति यावत्, य सौध राजसदन तस्मिन् तदभ्यन्तरे इत्यर्थ यत् सवहन प्रापण स्थानात् स्थानान्तर प्रति नयनमिति यावत्, गमनमागमन वेत्यर्थ, तस्मिन् (विषये) सहायिका साहाय्यकरी, करणभूतेति यावत्, तस्या तथाविधाया शिबिकाया याप्ययाने, पुरुषवाह्ये यानविशेषे इत्यर्थ, समासितुमुपवेष्टुम्, सपूर्वात् आस उपवेशने इत्यस्मात् तुमुन्, महीपे मही पातीति

तस्मिन् राजनि इत्यर्थं, सिंहासनात् राजासनात् समुत्थिते उत्थितवति सतीति शेष सोऽसौ युवा युवक मरभस सवेगम् उपासर्पत् उपागच्छत्, तत्र सप्राप्त इत्यर्थ । उपपूर्वात् सृप्लृ गतौ इत्यस्मात् लङ्।

५७ **अप्राक्षीत्**–पृष्टवान् । प्रच्छ ज्ञीप्सायाम् इत्यस्य लुङ्प्रथमपुरुषैकवचनम् ।

" **परुषेक्षणपातपूर्वम्**–परुष कठोर यत् ईक्षण दृष्टि तस्य पात पातन, निक्षेपणमिति यावत्, पूर्वं यस्मिन् कर्मणि तद्यथा स्यात्तथा। कठोरदृष्टिपात कुर्वन् सन्नित्यर्थ ।

" **भयार्दितस्वान्ता**–भयेन अर्दित व्यथितम्, अर्द हिसायाम् इत्यस्मान्निष्ठा, स्वान्त मनो येषा ते तथोक्ता ।

" **विस्मयविकसिताक्षा**–विस्मयेन आश्चर्येण विकसिते विकास प्राप्ते, उत्फुल्ले इति यावत्, अक्षिणी येषा ते तथाभूता । विस्मयोत्फुल्ललोचना इत्यर्थं ।

" **कथमिव स्वापराधम्**–अय युवक कथमिव केन प्रकारेण नु प्रगल्भ यथा स्यात्तथा धृष्टतापूर्वकमित्यर्थं स्वापराध स्वमात्मन अपराध दोष प्रतिपद्यते स्वीकरोति। प्रतिपूर्वात् पद गतौ इत्यस्मात् लट्।

" **मूर्धरत्नञ्च प्रायच्छत्**–सत्कार एव सत्कृति, 'सत्' इत्येवपूर्वात् करोते स्त्रिया भावे क्तिन्, तस्या सङ्केत चिह्नमेव स्वरूप यस्य तत्, समानचिह्नात्मकमित्यर्थं, मूर्धरत्न मूर्ध्नो मस्तकस्य रत्न मणि च प्रायच्छत् अददात्।

" **सत्यव्यवहारनिघ्नम्**–सत्यस्य एतन्नाम्न गुणस्य व्यवहार आचरण तस्मिन् निघ्नमायत्तम् अधीनमिति यावत्।

५८ **"कागजी"पात्रेण संवदन्ति**–"कागजी" इति पात्रविशेषस्य नाम। "कागजी" इति नामकं यत् पात्रं भाण्डं तेन संवदन्ति सं-वादिनः सदृशा वा भवन्ति इत्यर्थः। संपूर्वात् वदतेर्लट्।

" **निकषनिवेशितमात्रेषु**–निकषे शाणे, परीक्षणशिलायामिति यावत्, 'शाणस्तु निकषः कषः' इत्यमरः, निवेशिता स्थापिता एवे-ति निकषनिवेशितमात्रा, तेषु। मयूरव्यंसकादयश्चेति समासः। मात्रशब्दोऽत्र अवधारणार्थकः (एवकारार्थः)। तेन सह नित्यसमासत्वात् अस्वपदविग्रहः।

" **दुर्वहो हि तेषाम्**–दुर्वलप्रकृतीनां दुर्बला अशक्ता प्रकृतिः स्वभावः येषां तादृशानां तेषां विश्वासनिर्वाहः विश्वासस्य विस्रम्भस्य निर्वाहः निर्वहणं, तदनुकूलकार्यनिष्पादनमिति-यावत्, दुर्वहो दुःखेन वोढुं शक्यः, दुर्धरो दुःसाध्यो वेत्यर्थः। हि इति निश्चये। 'हि हेताववधारणे' इत्यमरः।

" **तद्ग्रन्थनिविष्टदृष्टिः**–ग्रन्थः पुस्तकम्। स ग्रन्थः इति तद्ग्रन्थः तस्मिन् निविष्टा निहिता दृष्टिरीक्षणं यस्य येन वा सः। तत्पुस्तकं निर्निमेषं पश्यन्नित्यर्थः।

" **बाष्पपटलपूरपरिप्लुतनेत्रः**–वाष्पानामश्रूणां यत् पटलं समूहः तस्य यः पूरः ओघः, प्रवाहः इति यावत्, तेन परिप्लुते परि-पूर्णे नेत्रे चक्षुषी यस्य सः तथाभूतः।

" **अभिनिचाय्य**–दृष्ट्वा। अभि+नि इत्येवपूर्वात् चायृ पूजा-निशामनयोः (निशामनमालोचनं दर्शनं वा) इत्यस्मात् क्त्वाप्रत्ययः। क्त्वो ल्यप्।

" **उपन्यस्तार्थप्रतिपादनेन**–उपन्यस्तः उपक्षिप्तः, वर्णितः इति यावत्, यः अर्थः विषयः तस्य प्रतिपादनं निरूपणम्, अस्मभ्यं ज्ञाप-

नमिति यावत् तेन।

५९ **कागजीपात्रप्रतिरूप**–'कागजी' इति नामक यत्पात्र भाण्ड तेन प्रतिरूप सदृश ।

" **त्रिदशापगा पूरोत्पीडेन पर्यपूर्यत नितराम्**–त्रिदशा देवा तेषाम् आपगा नदी, गङ्गानदीत्यर्थ, पूर ओघ, जलविप्लव इति यावत्, तस्य य उत्पीड अतिशय तेन नितराम् अत्यधिक पर्यपूर्यत परिपूरिता अभूत्।

" **तस्यामवपतितोऽपि अभूत्**–तस्याम् (अजायाम्) अवपतित आक्रमितु पतित सन्नपि प्रतिहत व्याहत, कुण्ठित इति यावत्, प्रयत्न चेष्टित यस्य स तथोक्त अभूत् अभवत्।

" **समुत्तीर्णतरस्वत्स्रोता**–समुत्तीर्ण लङ्घित तरस्वत् वेगवत् स्रोत पूर, जलप्रवाह इति यावत्, यया सा।

" **शान्तं पाप, शान्त पापम्**–मा मैव वाच्यमित्यर्थ, 'शान्त पापमनिर्देश्ये' इत्युक्ते । लोकोक्तिरियमिष्टजन प्रति अनिष्टवचनाक्षमजनाशीर्वचनरूपा। 'शान्तम्', 'धिक् शान्तम्', 'शान्त पापम्' इत्यनर्थान्तिरम्। अवद्यस्य असत्याशुभवचनस्य वा अश्रव्यताद्योतनाय कर्णो पिधाय 'शान्त पापम्, शान्तं पापम्' इत्युच्चार्यते तज्ज्ञै ।

६० **अपि नाम**–अपि इति प्रश्ने। नामेति सभावनायाम्। 'गर्हासमुच्चयप्रश्नशङ्कासभावनास्वपि' 'नाम प्राकाश्य-सभाव्यक्रोधोपगमकुत्सने' इत्यमर। 'सभाव्यते किमेतत्?' इति पदद्वयस्य समुच्चितोऽर्थ ।

" **सत्यन्यायोपासकानाम्**–सत्य तन्नामको गुण तथ्यकथनादिरूप । न्याय यथोचितात् अभ्रशोऽपतन वा, समीचीननीतिरिति

यावत्। सत्यञ्च न्यायश्चेति तयो उपासका भक्ता, तदनुसर्तार इत्यर्थ, तेषाम्।

६० **सङ्ग्राम समङ्गचकार्षु**—सङ्ग्राम युद्ध समङ्गचकार्षु अङ्गीकृतवन्त, युद्ध कृतवन्त इत्यर्थ। अनङ्गम् (अस्वाङ्ग) अङ्ग (स्वाङ्ग) करोति इति अङ्गीकरोति, सम्पूर्वस्य अङ्गीकरोते परस्मैपदे लुङ्प्रथमपुरुषबहुवचन 'समङ्गचकार्षु' इति।

" **सैनिकैरभिषेणित पिशिताशनेन्द्र**—सेना समवैति सैनिक, सैन्य योद्धा वेत्यर्थ। 'समवायान् समवैति' इति सूत्रेण ठक्। सैनिकै योद्धृभि अभिषेणित आक्रान्त पिशिताशनेन्द्र पिशिताशनाना राक्षसानामिन्द्र राजा, रावण इत्यर्थ।

" **अभिचारशक्तिमशिश्रियत्**—अभिचारस्य जारणमारणोच्चाटनादे हिसाकर्मण, 'हिंसाकर्माऽभिचार स्यात्' इत्यमर, शक्ति बलम् अशिश्रियत् आश्रितवान। श्रिञ् सेवायाम् इत्यस्य परस्मैपदे लुङ्प्रथमपुरुषैकवचनम्।

" **तमभित**—त रावणमभित परित। तस्य सर्वेष्वपि पार्श्वेषु इति भाव। अभितोयोगे 'अभित परित समया ' इत्यादिवार्तिकेन द्वितीया।

" **मिथ्यामाया . . . नेतरे ते**—ते रामभद्रा सौमित्रयश्च मिथ्या मिथ्याभूता, अयथार्था इति यावत्, मायामया इन्द्रजालरूपाश्च ये छायापुरुषा छायातुल्या पुरुषा तेभ्य इतरे अन्ये न नैव आसन् इति शेष। ते हि इन्द्रजालवत् छायावच्च अवास्तविका आसन्नित्यर्थ।

" **विस्मयस्तिमिता**—विस्मय आश्चर्य तेन स्तिमिता स्तम्भिता

निश्चला इति यावत्। विस्मयविमूढा इति भाव ।

६० **व्यरंसिषु**—व्यरमन्, विरता अभवन् इत्यर्थ । विपूर्वात् रमतेर्लुङ । 'व्याङपरिभ्यो रम' इति परस्मैपदम्।

" **किङ्कर्तव्यविमूढान्**—किं कर्तव्यम् इत्यस्मिन् विषये विमूढा विभ्रान्ता तान्। कर्तव्याकर्तव्यविचारासमर्थान् इत्यर्थं ।

" **हर्षप्रकर्षमेष्यामि**—हर्षस्य आनदस्य प्रकर्ष प्रवृद्धि, अतिशय इति यावत्, तम् एष्यामि प्राप्स्यामि। इण् गतौ इत्यस्माल्लृट्। अतिहृष्टो भविष्यामि इत्यर्थ ।

' **प्रतापशालिशरासने**—प्रताप प्रभावविशेष कोशदण्डज तेजो वा, 'स प्रताप प्रभावश्च यत्तेज कोशदण्डजम्' इत्यमर । तेन शालते शोभते इति तादृश यत् शरासन धनुस्तस्मिन्।

" **मिथ्यामूर्तीस्ता निर्भिद्य**—मिथ्याभूता मूर्तय मिथ्यामूर्तय, अयथार्थाकृतय इत्यर्थं । मध्यमपदलोपी समास । ता निर्भिद्य विद्ध्वा। निरुपसृष्टात् भिदिर् विदारणे इत्यस्मात् क्त्वा।

" **समुत्सारयितुम्**—सम्यक् दूरीकर्तुम्। सम्+उत् इत्येवपूर्वात् सृ गतौ इत्यस्मात् णिजन्तात् तुमुन्।

६१ **हृदयादानन्दनिर्भरात्**—आनन्द समोद तेन निर्भर परिपूर्ण तस्मात् तथाभूतात् हृदयात् स्वान्तात्।

" **मालतीप्रसूनपरिमलेन**—मालत्या जाते, लताविशेषस्येति यावत्, 'सुमना मालती जाति' इत्यमर, यानि प्रसूनानि पुष्पाणि तेषा परिमल सुगन्ध तेन।

" **अथ चेद् .. प्रयस्यति**—अथशब्दो मङ्गलाद्यर्थे प्रसिद्ध, 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमर । स चात्र आरम्भसूचक पक्षान्तरस्योपन्यासात्। अथ चेत् यदि तु असौ स राजा वास्तव वास्तविक प्रसाद प्रसन्नता तस्मिन् असति अविद्यमाने हसितु प्रयस्यति यतते तदा इत्यादि अग्रे अवदताम्।

६१ **सुवासितप्रस्रवणमिव सोस्रवीति स्म**—सुवासित सुरभित यत् प्रस्रवण निर्झर तदिव सोस्रवीति भृशमनिशेयेन वा स्रवति स्म। स्रु गतौ इत्यस्मात् क्रियासमभिहारे (पौन-पुन्येऽतिशये वा) यङ, तस्य लुकि 'सास्रु' इति धातुर्व्युत्पद्यते। तस्मात् लट्प्रथमपुरुषैकवचनम्। स्म इत्यव्ययमतीतेऽर्थ 'स्मातीतेऽस्तमदर्शने' इत्यमर।

" **तदेव हासस्यैतस्य निहितमासीत्**—तदेवम् इत्थम् एतस्य अस्य हासस्य हसितस्य महीयस्त्वम् अतिशयमहत्त्वम्। द्वयो-रेकस्यातिशये 'महत्'-पदात् ईयसुन्, ततो 'महीयस्' इति प्रातिपदिकात् त्व। कात्स्र्न्येन सपूर्णतया, कृत्स्नशब्दात् भावे ष्यञ्, एतत्सत्यत्वे एतस्य हासस्य सत्यत्व वास्तविकत्व तस्मिन् निहित प्रतिष्ठितम् आसीत् अभूत्। अर्थात्, तदीय-हासस्य यत सौरभ माहात्म्य वा अभूत् तस्य आधार सत्य-मेवासीत् न किमप्यन्यत्।

" **रचितराजोचितोपचारा**—रचिता कृता, प्रस्तुता इति यावत्, राजोचिता राज्ञामुचिता, राजयोग्या इत्यर्थ, उपचारा उप-करणानि येषु ते तथोक्ता इति भोजनमञ्चाना विशेषणम्।

" **मरकतपद्मरागप्रत्युप्तै**—मरकतानि हरिन्मणय। पद्मरागा शोणरत्नानि। मरकतानि च पद्मरागाश्चेति तै प्रत्यु-प्तानि अनुविद्धानि, खचितानि इति यावत्, तै इति पात्राणा विशेषणम्।

" **प्रोज्ज्वलवज्रजटितै**—प्रोज्ज्वलानि अतिभास्वराणि वज्राणि हीरका। 'वज्रोऽस्त्री हीरके पवौ' इत्यमर। तै जटि-तानि सहतानि तै इति पात्राणा विशेषणम्। जट सघाते इत्यस्मान्निष्ठा।

" **उररीकृत्य**—अङ्गीकृत्य, स्वीकृत्य। उररीशब्दो गतिसज्ञक अङ्गीकरणे विस्तारे च वर्तते। 'ऊरर्यूरी चोररी च विस्तारे-

ऽङ्गीकृतौ त्रयम्' इत्यमर। तस्य 'कृत्वा' इति पदेन सह 'कुगतिप्रादयः' इति सूत्रेण समासः। 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति क्त्वा ल्यबादेशः।

६१ **प्रतरा प्राकृतानि च पात्राणि**—पात्राणि भाण्डानि च, 'च'-शब्दोऽत्र वाक्ययोः संयोजकः, प्रतरामत्यन्तं प्राकृतानि साधारणानि आसन् इति शेषः।

" **व्युदस्य**—त्यक्त्वा। वि+उत्पूर्वात् असु क्षेपणे इत्यस्मात् क्त्वा-प्रत्ययः। क्त्वो ल्यप्।

" **पारमार्थिकप्रीत्युपेतम्**—परमार्थतो भवा निर्वृत्ता वा इति पारमार्थिकी वास्तविकी। 'अध्यात्मादेष्ठञिष्यते' इति ठञ्। प्रीतिः प्रेम तया उपेतं युक्तम्।

" **वैभवाभिव्यञ्जनैकबीजः**—विभोर्भावः वैभवमैश्वर्यमित्यर्थः, तस्य अभिव्यञ्जनं प्रदर्शनमेव एकं केवलं बीजं कारणं यस्य सः तथोक्तः।

" **निकृष्टवर्णायाः**—निकृष्टः नीचः वर्णः शूद्राख्यो यस्याः तस्याः।

" **भोज्यान्तराभावेन**—अन्यद् भोज्यं भोज्यान्तरम्। 'मयूरव्यंसकादयश्च' इति समासः। अन्तरशब्देन सह नित्यसमासत्वात् अस्वपदविग्रहः। भोज्यान्तरस्य अन्यस्य कस्यचित् खाद्यस्य अभावः अविद्यमानता तेन। हेतौ तृतीया।

६२ **प्रथितप्रतापाय**—प्रथितः प्रसिद्धः प्रतापः प्रभावविशेषः यस्य तस्मै।

" **प्रीतिपरिप्लुतेनान्तरेण**—प्रीतिः प्रेम तया परिप्लुतं परिपूर्णं तेन तथाभूतेन अन्तरेण अन्तःकरणेन।

" **पुलकिततनुः**—पुलकः रोमाञ्चः संजातोऽस्या इति पुलकिता रोमाञ्चिता, सम्प्रहृष्टा इति यावत्। 'तदस्य संजातं ... ' इति इतच्। तनुः शरीरं यस्य सः।

" **समतीतेष्वपि परःसहस्रसंवत्सरेषु**—सहस्रात् दशदशशतात् परः अधिकाः इति परःसहस्राः सहस्राधिकसंख्याकाः इत्यर्थः। 'पर-

गताद्यास्ते येषा परा सख्या गतादिकात्' इत्यमर । 'पञ्चमी' इति योगविभागात् समास । 'राजदन्तादिषु परम्' इत्युपसर्जनस्य 'सहस्र'पदस्य परनिपात । पारस्करादित्वान्मुडागम । पर सहस्रा सवत्सरा वर्षाणि तेषु समतीतेषु व्यतीतेषु अपि ।

६२ **अद्यावधि**–अद्य अद्यतनो दिवस अवधि यस्मिन् कर्मणि तद्यथा स्यात्तथा । अद्य यावत् इत्यर्थ ।

" **साधिक्षेप निचिक्षिपुस्तयोश्चक्षु**–तयो तुरुष्कयो चक्षु दृष्टि साधिक्षेपम् अधिक्षेपेण तिरस्कारेण सह यथा स्यात्तथा निचिक्षिपु निक्षिप्तवन्त, पातितवन्त इत्यर्थ । तौ सतिरस्कार दृष्टवन्त इति भाव ।

" **सुमहत् कार्य निर्वोढुम्**–सुतरामतिशयेन महत् गुरु कार्य कर्म निर्वोढु सपादयितुम् ।

" **समासीसदत्**–प्रापत्, प्राप्तवान् । आङ षद पद्यर्थे इति चौरादिकात् धातो सपूर्वात् लुङ, प्रथमपुरुषैकवचनम् ।

" **स्वसर्वस्वभूतम्**–सर्व सपूर्ण स्व धनादिभूतमिति सर्वस्वम् । स्व निज सर्वस्वमिति स्वसर्वस्वम् । स्वसर्वस्व भूतमिति स्वसर्वस्वभूतम्, स्वसर्वस्वात्मकमिति भाव । 'सुपा' इति सूत्रेण सुप्समास ।

" **ईश्वरसन्देशहर**–ईश्वरस्य भगवत सन्देशहर दूत । 'स्यात् सदेशहरो दूत' इत्यमर ।

६३ **उपसजहार**–उपसहार कथनसमाप्ति वा कृतवान् । उप+सपूर्वात् हृञ् हरणे इत्यस्मात् परस्मैपदे लिट् ।

" **महार्घोपहारतुल्य**–महान् अर्घ मूल्य यस्य स चासौ उपहार-प्रीतिदान चेति महार्घोपहार तेन तस्य वा तुल्य सदृश ।

" **कर्णे कृत्वा**–आकर्ण्य, श्रुत्वा इत्यर्थ । 'आकर्णयति' इत्यर्थे 'कर्णे करोति' इत्यय प्रयोगो वाक्सप्रदायबलाद् रूढता गत ।

६३ **समागतेऽपि गोधूलिकाले**–गवा धेनूना धूलि तन्खुरोद्धूत रज इत्यर्थ यस्मिन् काले स गोधूलिकाल सध्यासमय इति भाव । तस्मिन् समागते आयातेऽपि ।

" **क्षुत्तृषार्त्त**–क्षुद् बुभुक्षा, तृषा पिपासा। क्षुच्च तृषा चेति ताभ्या हेतुभूताभ्याम् आर्त्त पीडित ।

" **निष्फलपुरुषार्थपरिश्रान्त**–निर्गत फल यस्मात् स निष्फल, निरर्थक इति यावत्, य पुरुषार्थ परिश्रम तेन हेतुना परिश्रान्त क्लान्त ।

" **पतत्रिनिलयप्राप्तिप्रत्याशया**–पतत्र पक्ष । तदस्यास्तीति पतत्री पक्षी। मत्वर्थीय इनि । तस्य निलय गृह, नीड इति यावत्, तस्य या प्राप्ति तस्या प्रत्याशा आशा तया।

" **त्रिशूलाकृतीनि**–त्रिशूल शिवस्य त्रिशिख त्रिशीर्षक वा प्रहरण तस्य आकृतिरिव आकृतिर्येषा तानि। त्रिशूलसदृशाकाराणि इत्यर्थ ।

" **निरतिशयशक्तिशालीनि**–निर्नास्ति अतिशया अधिका यस्या सा निरतिशया अपरिमिता इत्यर्थ, शक्ति सामर्थ्य तया शालन्ते शोभन्ते इति तानि।

" **स्वशोकविमुक्ताश्रुभ्य**–स्वस्य आत्मन य शोक दु ख तस्मिन्, दु खसमये इत्यर्थ, (यद्वा, स्वशोकेन हेतुना) विमुक्तानि त्यक्तानि अश्रूणि नयनसलिल तेभ्य तदपेक्षया इत्यर्थ । 'पञ्चमी विभक्ते' इति सूत्रेण विभागेऽर्थे पञ्चमी।

" **दयाद्रवार्द्रहृदयस्य**–दया करुणा एव द्रव तरलद्रव्य तेन आर्द्र क्लिन्न, सरसमिति यावत्, हृदय स्वान्त यस्य तस्य।

" **तदस्रभरस्रस्त**–तस्य व्याधस्य अस्राणि अश्रूणि तेषा भर भार तेन स्रस्त अध पतित । स्रसु अध पाते इत्यस्मात् निष्ठा।

" **शमननिशान्तावेशिक**–शमन यम तस्य यत् निशान्त गृह तस्य आवेशिक अतिथि । मृत्यु प्राप्त इत्यर्थ । 'स्युरावेशिक

आगन्तुरतिथिर्ना गृहागते' इत्यमर ।

६४ **महाफलपत्राण्युपहार्यकार्षीत्**—महाफल विल्ववृक्ष तस्य पत्राणि पर्णानि, दलानि इति यावत्, उपहार्यकार्षीत् उपहारतया दत्तवान्। अनुपहारम् उपहारम् अकार्षीत् इति विग्रहे अभूततद्भावे च्वि ।

" **व्यश्राणयच्च विशेषत स्वान्तरश्रूणि**—अन्तर्भवानि अश्रूणि अन्तरश्रूणि। विशेषत विशेषेण। सार्वविभक्तिकस्तसि। स्वस्य आत्मन अन्तरश्रूणि अन्त करणोद्भवानि अश्रूणि व्यश्राणयत् दत्तवान् च। विपूर्वात् श्रण दाने इत्यस्मात् चौरादिकात् धातो लङ।

" **निर्व्याजात्मनाम्**—निर्गतो व्याज छल यस्मात् स निर्व्याज निश्छल, सरल इति यावत्, आत्मा अन्तर येषा तेषा तथोक्तानाम्। सरलान्त करणानामिति भाव ।

" **सत्यसारल्यस्नेहिन**—सत्य च सारल्य सरलता चेति सत्यसारल्ये। सरलशब्दाद् भावे ष्यञ्। तयो स्नेहिन स्नेहनशीला अनुरागिण इत्यर्थ । ताच्छील्ये णिनि ।

" **मानुषोपज्ञानि शास्त्राणि**—उपज्ञायते इत्युपज्ञा, उपज्ञानमित्यर्थ, विनोपदेशेन स्वयमुपलब्ध ज्ञानमिति भाव। उपपूर्वात् ज्ञा अवबोधने इत्यस्मात् कर्मण्यङ। मानुषस्य मनुष्यस्य उपज्ञा इति मानुषोपज्ञम्। 'उपज्ञोपक्रम तदाद्याचिख्यासायाम्' इति समस्तपदस्य नपुसकत्वम्। मानुषोपज्ञानि मनुष्येण आदौ ज्ञातानि इत्यर्थ, 'उपज्ञा ज्ञानमाद्य स्यात्' इत्यमर, शास्त्राणि विज्ञानानि।

" **सत्यसव्यपेक्षा**—विशेषा अपेक्षा आकाङक्षा व्यपेक्षा। व्यपेक्षया सह वर्तन्ते इति सव्यपेक्षा। सत्ये सव्यपेक्षा तदाश्रिता इत्यर्थ ।

" **वय स्थताम्**—वयसि तिष्ठतीति वय स्थ प्राप्तवया, युवा इत्यर्थ ।

मुनि स्य' इति कप्रत्यय । 'वयस्थस्तरुणो युवा' इत्यमर । तस्य भावस्तत्ता ताम्। भावे तल्। स्त्रियां टाप्।

६४ **सत्यभाषणाभ्यसनारम्भस्य**—सत्यस्य यद् भाषण कथन तस्य यद् अभ्यसनम् अनुशीलन पुन पुन सत्यभाषणरूप तस्य आरम्भ तस्य।

" **सत्यस्य स्वरूपमवबोध्यमनुसन्धेयम् च**—सत्यस्य एतन्नाम्न गुणस्य स्वरूप स्व रूप निज यथार्थरूपमित्यर्थ, अवबोध्य ज्ञेयम् अनुसन्धेयम् अन्वेषणीयञ्च। अवपूर्वाद् बुध बोधने इत्यस्मात्, अनुसपूर्वात् डुधाञ् धारणपोषणयोरित्यस्माच्च कर्मणि ण्यत्।

६५ **निष्पत्रपुष्पपल्लवत्वात्**—निर्गतानि पत्राणि पर्णानि पुष्पाणि कुसुमानि पल्लवा किसलया च, 'पल्लवोऽस्त्री किसलयम्' इत्यमर, यस्मात् तस्य भावस्तत्त्व तस्मात्। पत्रपुष्पपल्लवै रहितत्वात् इत्यर्थ।

" **नि सत्त्वनीरसस्थाणुम्**—निर्गत सत्त्व सारभागो यस्मात् स नि-सत्त्व। निर्गतो रसो यस्मात् स नीरस। नि सत्त्वश्च नीरसश्चासौ स्थाणु शाखापल्लवादिरूपविस्ताररहित तरुश्चेति तम्। छिन्नविटप शुष्क वृक्षमित्यर्थ।

" **कतिपयसप्ताहसमनन्तरम्**—सप्तानामह्ना समाहार सप्ताह। समासान्त टच्। समाहारत्वाद् एकवचनम्। 'रात्राह्नाहा पुसि' इति पुस्त्वम्। कतिपये (कतिपया वा) केचित् इत्यर्थ, ये सप्ताहा तेषा समनन्तर पश्चात् यथा स्यात्तथा।

" **परिशालमानम्**—परिशालते इति परिशालमान तम्, सर्वत शोभमानम् इत्यर्थ। परिपूर्वात् शाल श्लाघायां दीप्तौ च इत्यस्मात् लट्, लट शानच्।

" **पचेलिमफलभारावनत**—पच्यन्ते इति पचेलिमानि पाकोन्मुखानि इत्यर्थ। 'केलिमर उपसख्यानम्' इति वार्तिकेन पचे

कर्मकर्तरि केलिमर्। नथाविधानि यानि फलानि तेषा यो भार भर तेन अवनत अवनम्र।

६५ **रुण्डद्रुमप्रकाण्ड इव**—रुण्ड पत्रशाखादिरहित य द्रुम वृक्ष तस्य प्रकाण्ड स्कन्ध इव, तद्वत् इत्यर्थ। 'अस्त्री प्रकाण्ड स्कन्ध स्यात्' इत्यमर।

" **सेवतीप्रसूनस्तबक**—सेवती शतपत्रीक्षुप तस्या यानि प्रसूनानि पुष्पाणि तेषा स्तबक गुच्छ। 'स्याद् गुच्छकस्तु स्तवक' इत्यमर।

" **परस्परवैमत्य.. परिहर्तुमपारयन्त**—विपरीता मतिर्विमति। तस्या भावो वैमत्यम्। भावे ष्यञ्। परस्परस्य अन्योन्यस्य वैमत्य मतभेद परिहर्तु दूरीकर्तुम् अपारयन्त न शक्नुवन्त।

" **अनुपूर्वश**—पूर्वमनु (अनुगतम्) इत्यनुपूर्वम्। अनुपूर्वमेव अनुपूर्वश। स्वार्थे शस्। क्रमेण अनुक्रमशो वेत्यर्थ।

" **परज्ञातानभिज्ञ**—परेण अन्येन ज्ञातमिति परज्ञातमन्यविदितमित्यर्थ। तस्य अनभिज्ञ अपरिचित। अभिपूर्वाज्जानाते कर्तरि क। ततो नञ्तत्पुरुष।

" **सत्यस्य स्वल्पामेव कलामाकलयन्त**—सत्यस्य स्वल्पाम् अत्यल्पाम्, लघुतरामेवेत्यर्थ, कलाम् अशम् आकलयन्त जानन्त। आङ्पूर्वात् कल गतौ सख्याने च इत्यस्मात् लट शत्रादेश।

६६ **सुतमामल्पीयस्त्वमापद्येत**—सुतमामतितमाम् अत्यधिकमित्यर्थ। 'अतिशायने तमबिष्ठनौ' इत्यनेन सुशब्दात् तमप्। 'किमेत्तिडव्यय ' इत्यादिना आमुप्रत्यय। अल्पीयस्त्वमत्यल्पत्वम्। अयमनयोरतिशयेन अल्प इति विग्रहे अल्पशब्दादीयसुन्। ततो भावे त्व। आपद्येत प्राप्नुयात्। आङ्पूर्वात् पद गतौ इत्यस्मात् विधिलिङ। प्रथमपुरुषैकवचनम्।

" **प्रालेयाद्रिप्रस्थप्रदेशम्**—प्रालेय हिमम्। 'तुषारस्तुहिन हिमम्, प्रालेय मिहिका चाथ' इत्यमर। तस्य अद्रि पर्वत, हिमा-

लय इति यावत्, तस्य य प्रस्थ सानु, 'स्नु प्रस्थ सानु-याम्' इत्यमर, तस्य प्रदेश समनलदेश नम्मिन्। हिमा-लयस्य पर्वतीये प्रदेशे इत्यर्थ ।

६६ **अक्षुण्णविपिनपरिवृताम्**–क्षुण्ण पादाहतम्। न क्षुण्णमित्यक्षुण्ण पदसचाररहितमित्यर्थ, क्षुद मपेषणे इत्यस्मान्निष्ठा, ततो नञा सह तत्पुरुषसमाम, यद् विपिन वन तेन परिवृता परितो वेष्टिता ताम्।

" **धीविभासिनाम्**–धिया बुद्धचा विभासन्ते विशेषेण दीप्यन्ते इति धीविभासिनस्तेषाम्। विशेषबुद्धिशालिनाम् इत्यर्थ ।

" **द्वीप्यन्तर्धानपदे**–द्वीपी व्याघ्र, 'शार्दूलद्वीपिनौ व्याघ्रे' इत्यमर, तस्य यत् अन्तर्धान तिरोभाव, अदृश्यीभाव इति यावत्, तस्य पद स्थान तस्मिन्। यस्मिन् स्थाने सोऽदृश्यताम् अगात् तत्रेति भाव ।

" **अधिष्ठास्यमानात्**–अधिष्टास्यते इति अधिष्ठास्यमान निवास-स्थानत्वेन आश्रयिष्यमाण इत्यर्थ, तस्मात्। अधिपूर्वात् तिष्ठते कर्मणि लृट्, लृट शानच्।

" **स्थूलायसशलाका न्यखानिषु**–अयसो विकार आयस। विका-रार्थेऽण्। अण्णन्तत्वात् स्त्रिया ङीपि आयसी। स्थूला चासौ आयसी लोहनिर्मिता च शलाका ता न्यखानिषु निखातवन्त, भूमौ कीलितवन्त निहितवन्तो वा।

" **विश्वम्भराभारसहस्य**–विश्व बिभर्तीति विश्वम्भरा पृथ्वी तस्या भार भर महते स्वदेहे दधाति इत्यर्थ, तस्य।

" **काश्यपीगर्भात्**–काश्यपी पृथ्वी, 'धरा धरित्री धरणि क्षोणिर्ज्या काश्यपी क्षिति' इत्यमर, तस्या गर्भोऽन्तराल तस्मात्।

" **कुण्डलीशशोणितशोणित**–कुण्डलिना सर्पाणामीश राजा, शेष-नाग इत्यर्थ, तस्य यत् शोणित रुधिर तेन शोणित रक्त।

६७ **प्रत्यन्तपर्वतोपान्तवर्तिनी**–प्रत्यन्तपर्वत पाद, पर्वतसमीपस्थ

जल्पपर्वन इति भाव, तन्द उपान्ते समीपे वर्तत इति सा। ताच्छील्ये णिनि। नान्तत्वात् स्त्रिया ङीप्।

६७ **शेमुषीजुषाम्**–शेमुषी बुद्धि, 'बुद्धिर्मनीषा धिषणा धी प्रज्ञा शेमुषी मति' इत्यमर, ता जुषन्ते सेवन्ते इति तेषाम्। शेमुषीशब्दे उपपदे जुषी प्रीतिसेवनयो इत्यस्मात् क्विप्।

" **मृषाभाषितमसिध्यत्**–मृषाभूत मिथ्याभूत भाषित भाषणम् इति मृषाभाषितम्। भाष व्यक्तायां वाचि इत्यस्मात् नपुसके भावे क्त। असिध्यत् सिद्धम्, प्रमाणितमभूदित्यर्थ।

" **स्ववचसामाप्तत्वेऽनुत्पन्नसशया**–स्वानि निजानि वचासि वचनानि तेषाम् आप्तत्वे सत्यत्वे, 'आप्त यथार्थवक्ता' इति 'तर्कसग्रह'-वचनात्, अनुत्पन्न न उत्पन्न सशय सदेह येषा ते।

" **सभावयन्ति च तानन्धविश्वासानपि परमार्थान्**–तानित्यत्र तच्छब्द प्रक्रान्त प्रकृत वा परामृशति, अतश्चासौ यच्छब्दानपेक्ष, 'प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यदुपादान नापेक्षते इति' काव्यप्रकाशकारा। तान् प्रकृतान् अन्धा अज्ञानपूर्णा विश्वासा इति अन्धविश्वासास्तानपि परमार्थान् सत्यवस्तूनि वास्तविकानि वा तत्त्वानि सभावयन्ति मन्यन्ते। सपूर्वात् भू अवकल्कने (अवकल्कन मिश्रीकरणमित्येके चिन्तनमित्यन्ये) इत्यस्मात् चौरादिकात् धातोर्लट्।

" **मूढविश्वाससकुल**–मूढा अज्ञानयुक्ता। मुह वैचित्त्ये इत्यस्मात् निष्ठा। एवभूता विश्वासा तै सकुल पूर्ण।

" **सत्यानुसधानविधि**–सत्यस्य यत् अनुसन्धानमन्वेषण तस्य विधि पद्धति।

" **पार्यमस्माभिरभ्यसितु भूयस्तरामन्यै स्वात्मनोऽप्रतारणम्**–अन्यै अपरै जनै स्वात्मन स्वस्य अप्रतारणम् अवञ्चनम् कर्म अस्माभि कर्तृभि भूयस्तरा बहुतराम् अभ्यसितुम् अनुशीलयितु पार्य शक्यम्।

६८ **आरोपमात्रम्**–आरोप भ्रम । वस्तुनि अवस्त्वारोपोऽध्यारोप इति शङ्कर । आरोप एवेति आरोपमात्रम् । मयूर-व्यसकादिवत्समास ।

" **वस्तुवृत्तेनैव सा वक्रा सवृत्ता**––सा यष्टि वस्तुवृत्तेनेव वस्तुत एव वक्रा आकुञ्चिता सवृत्ता जाता इत्यादि अग्रे निगदव्याख्यातम् ।

" **व्याकुञ्चितमध्यभागा**–विशेषेण आकुञ्चित वक्र इति व्या-कुञ्चित, 'ऊर्मिमत् कुञ्चित नतम्, आविद्ध कुटिल भुग्न वेल्लित वक्रमित्यपि' इत्यमर, एवभूत मध्यो मध्यम भाग अवयव यस्या सा तथोक्ता ।

" **आपातप्रतीयमानम्**–आपाते तदात्वे, प्रथमक्षणे प्रथमदृष्टिपाते वा इत्यर्थ, प्रतीयमान ज्ञायमानम् । 'तदात्वे पात आपात' इति वैजयन्ती ।

" **स्वमतनिर्धारणम्**–स्वस्य आत्मन यत् मत सम्मति तस्य निर्धारण स्थिरीकरणम् ।

" **अवस्कन्तु सन्नह्यमान**–अवस्कन्तुम् आक्रमितुम् । स्कन्द गति-शोषणयो इत्यस्मात् अवपूर्वात् तुमुन् । सन्नह्यमान सन्नद्ध सज्जो वा भवन् । सपूर्वात् णह बन्धने इत्यस्मात् कर्म-कर्तरि लट्, लट शानच् ।

६९ **प्रश्रयातिशयस्तद्विश्रम्भश्च**–प्रश्रय आदर तस्य अतिशय आधि-क्य तद्विश्रम्भ तेषाम् (अपात्राणाम्) विश्रम्भ विश्वासश्च ।

" **मेषपालवेषपरिवेष्टितत्वात्**–मेषान् एडकान् अवीन् वा पालय-तीति मेषपाल । कर्मण्यण् । 'मेषवृष्णय एडके' इति, 'अवय शैलमेषार्का' इति चामर । तस्य यो वेष परिधान तेन परिवेष्टित आच्छादित । तस्य भावस्तत्त्व तस्मात् ।

" **चित्रकायचर्मावृतकाय**–चित्रकाय सिंह तस्य चर्मणा त्वचा आवृत परिवेष्टित काय शरीर यस्य स तथोक्त ।

६९ **यथा च पुरुष सप्रवर्तते**—यथा येन प्रकारेण च पुरुष परेषामन्येषा केवल बाह्यरूप बाह्य बहिर्भव बहिर्दृश्यमान वा रूप प्रतियन् विश्वसन् सन् भ्रान्ति भ्रममुपयाति प्राप्नोति भ्रान्तिग्रस्तो भवतीत्यर्थ, तथैव तेनैव प्रकारेण प्रायश बहुधा दोषैकदृष्टि दोषे दुर्गुणे एव एका केवला (केवल वा) दृष्टिर्यस्य तथाभूत सन् भवन्। 'एके मुख्यान्यकेवला' इत्यमर। अन्येषाम् अपरेषा विषये सबन्धे। विमर्श विचार पुरस्सर अग्रेसरो यस्मिन् कर्मणि तद्यथा स्यात्तथा, तथा न भवतीति अविमर्शपुरसर अविचारपूर्वकमित्यर्थ, स्वमतनिर्णये स्व निज यत् मत सम्मति तस्य निर्णय निर्धारण तस्मिन् अपि सप्रवर्तते प्रवृत्त सलग्नो वा भवति।

" **वनायुदेशशासिता**—वनायु एतन्नामक 'अरब' इति अद्यत्वे प्रसिद्ध देश। वनायुरेव देश तस्य शासिता शासक, राजा इति यावत्। शासु अनुशिष्टौ इत्यस्मात् कर्तरि तृच्।

" **तत्सदनद्वारोपसर्पणविलम्बम्**—तस्य हातिफीनामकस्य कवे यत् सदन गृह तस्य यत् द्वार कपाट तस्य उपसर्पणमुपगमन, तत्समीपे गमनमित्यर्थ, तत्र विलम्ब कालक्षेप तम्।

" **गृहाङ्गणवरणात्**—गृहस्य यत् अङ्गणम् अङ्गन तस्य यो वरण प्राकार, इष्टकादिविरचितवेष्टनमिति यावत्, तस्मात्। 'प्राकारो वरण साल' इत्यमर।

" **अनपाचीनचित्तवृत्ति**—अपाची एव अपाचीना पृष्ठवर्त्तिनी, अप्रकाशा इति यावत्। 'विभाषाञ्चेरदिक्स्त्रियाम्' इति स्वार्थे ख। न अपाचीना इति अनपाचीना प्रकाशा निर्दोषा वा चित्तवृत्ति चित्तस्य अन्तकरणस्य वृत्तिर्भावो यस्य स।

७० **तत्क्षणोद्भूतप्रथमभावनया**—तस्मिन् क्षणे पले उद्भूता उत्पन्ना

या प्रथमा आद्या भावना वृत्ति नया।

७० **सम्प्रधारयाञ्चकार**—निश्चिकाय, निश्चयमकरोत् इत्यर्थ। सम्+प्रपूर्वात् धृञ् धारणे इति धातोर्णिजन्तात् लिट् प्रथमपुरुषैकवचनम्।

,, **स्वसमरकर्मकीर्त्तनकुतूहलिन**—समरस्य युद्धस्य कर्म कार्यमिति समरकर्म। स्व निज यत् समरकर्म तस्य यत् कीर्तन वर्णन तस्य कुतूहलमुत्कण्ठा तद्वत। मत्वर्थीय इनि।

,, **अवदानानि अधिकृत्य**—अवदानानि पराक्रमान् 'पराक्रमोऽवदान स्यात्' इति भागुरि। यद्वा, अवदानानि पूर्ववृत्तानि महान्ति कर्माणि। 'अवदान कर्म वृत्तम्' इत्यमर। अधिकृत्य अवलम्ब्य, विषयीकृत्येति इति यावत्। (तस्य 'इस्माइलसफवी' नामकस्य राज्ञ) पराक्रमकार्याणा विषये इत्यर्थ।

,, **परच्छिद्रान्वेषणम्**—परेषामन्येषा यानि छिद्राणि दोषा तेषाम् अन्वेषणम् अनुसन्धानम्। परदोषानुदर्शनमिति भाव।

,, **न च खलु न प्रथन्ते . . . क्षिप्रतरमापतन्ति**— 'च'पदमेतद् वाक्य पूर्ववाक्येन सयोजयति। एकमेक प्रति इति प्रत्येकम्। प्रत्येकमपि पुरुषे पुरुषमात्रे इत्यर्थ केचन केचिद् दोषा अवगुणा न प्रथन्ते न भवन्ति इति खलु न, अपि तु अवश्यमेव भवन्तीत्यर्थ। (निश्चये नञ्द्वयप्रयोग। तथा चाधिकारसूत्रम्—"स्मृतिनिश्चयसिद्धार्थेषु नञ्द्वयप्रयोग सिद्ध" इति। वामनोऽपि—"सभाव्यनिषेधनिवर्तने नञ्द्वयमिति", किञ्च—"द्वौ नञौ प्रकृतार्थस्य दाढर्च्य गमयत" इति।) ये दोषा इत्यर्थ, 'यत्'पदमत्र पूर्वनिर्दिष्ट 'दोष'पद परामृशति, तदपेक्षया तस्य पुरुषस्य अपेक्षया प्रतिवेशिन प्रतिवासिन चक्षुषो दृष्टौ इत्यर्थ क्षिप्रतर शीघ्रतरम् आपतन्ति। अय भाव—प्रत्येकमपि मनुष्ये ये केऽपि दोषा अवश्यमेव भवन्ति।

ते च तस्य अपेक्षया अन्येषां समीपवर्तिना दृष्टिगोचरा शीघ्रतरं जायन्ते।

७० **न्यायशीलतया निर्णिनीषेम**—न्यायं यथोचिताद् अभ्रंशः शीलं स्वभावो यस्य तस्य भावस्तत्ता तया, न्यायपूर्वकमित्यर्थः, निर्णिनीषेम निर्णयं कर्तुमिच्छेम, 'निर्'पूर्वात् णीञ् प्रापणे इत्यस्मात् इच्छायां सन्। सन्नन्तात् तस्मात् विधि-लिङ, उत्तमपुरुषबहुवचनम्।

,, **सन्ति किलात्र वैशिष्ट्यम्**—अत्र अस्मिन् जगति नैके अनेके, बहव इत्यर्थः, नरो मनुष्याः। नृशब्दस्य प्रथमा-बहुवचनं 'नरः' इति। 'पुरुषाः पूरुषा नरः' इत्यमरः। सन्ति वर्तन्ते किल। किलेति संभावनायाम्। 'किल सं-भाव्यवार्तयोः, हेत्वरुच्योरलीके च' इति हेमचन्द्रः। यान् मनुष्यान् वयं पापकृतः पापं कुर्वन्ति इति ते तथाभूताः इति इत्येवं कल्पयन्तः मन्यमानाः न अनुकम्पामहे (तेषु) दयां न कुर्मः। स्वान्तःकरणे स्वस्य आत्मनः अन्तःकरणं मनः तस्मिन् निगूढं गुप्तं स्थूलदृगगोचरं स्थूला बाह्या या दृग् दृष्टिः तस्याः अगोचरम् अदृश्यं किमपि किञ्चिदपि वैशिष्ट्यं विशेषगुणम्। विशिष्टशब्दात् भावे ष्यञ्। वहन्ति धारयन्ति, कच्चित् इति कामप्रवेदने। 'कच्चित् कामप्रवेदने' इत्यमरः। 'वैशिष्ट्यं वहन्ति ते' इति लेखि-कायाः अभिप्रायो द्योत्यते 'कच्चित्'पदेन।

,, **विपुलमुपप्लवते स्म**—विपुलमत्यधिकमित्यर्थः उपप्लवते उप-द्रवं करोति स्म। उपपूर्वात् प्लुङ् गतौ इत्यस्मात् लट्। स्मेत्यव्ययं भूतार्थः। 'स्मातीतेऽस्तमदर्शने' इत्यमरः।

७१ **सत्त्वं पर्यवस्थातुं मतिमातस्थौ**—सत्त्वं जन्तुं, तं वृकमित्यर्थः, 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः, पर्य-वस्थातुं प्रतिकर्तुं मतिम् आतस्थौ मतिमकरोत्, निश्चयं

कृतवान् इत्यर्थः ।

७१ **समुपेतमात्रम्**—समुपेतं समीपं गतं इवेति समुपेतमात्रं तम्, उपगतं सन्तमेव तमित्यर्थः । मयूरव्यंसकादिवत् समासः ।

७२ **आपातमारात्मके**—आपाततः प्रथमदृष्ट्या मारात्मकः मारः मारणं हननं वा आत्मा स्वभावो यस्य स तथाभूतः, हिंसक इत्यर्थः, तस्मिन् । हिंसके प्रतीयमानेऽपि तस्मिन् इति भावः ।

,, **समबूबुधत्**—सम्बोधितवान्, आहूतवान् । सम्पूर्वात् बुध बोधने इत्यस्मात् णिजन्तात् लुङ् ।

,, **विप्रकुत्सास्पदानाम्**—विशिष्टा प्रवृद्धा च कुत्सा विप्रकुत्सा अतिनिन्दा इत्यर्थः । 'कुत्सा निन्दा च गर्हणे' इत्यमरः । तस्या आस्पदानि स्थानानि, पात्राणि इति यावत् तेषाम् । 'प्रतिष्ठाकृत्यमास्पदम्' इत्यमरः ।

,, **आपाततोऽप्रत्युद्धारेऽप्यपराधिनि**—आपाततः प्रत्यक्षतः अप्रत्युद्धारे नास्ति प्रत्युद्धारः पुनरुत्थानं यस्य तस्मिन्, पुनरुद्धर्तुमशक्ये इत्यर्थः, अपराधिनि दोषिणि अपि ।

,, **प्रेमलवप्रभावात्**—प्रेम्णः स्नेहस्य यो लवः कणिका, 'लवलेशकणाणवः' इत्यमरः, तस्य प्रभावः शक्तिविशेषः तस्मात् । 'शक्तयस्तिस्रः, प्रभावोत्साहमन्त्रजाः' इत्यमरः ।

,, **सावहेलम्**—अवहेलनमेव अवहेलः अवहेला वा, तिरस्कार इत्यर्थः । भावे घञि कृते अवहेलः, स्त्रीलिङ्गे भावे 'गुरोश्च हलः' इति अकारप्रत्यये स्त्रीप्रत्यये टापि च अवहेलेति । अवहेलेन अवहेलया वा सह यथा स्यात्तथा । सतिरस्कारमित्यर्थः ।

,, **घुणजग्धम्**—घुणः काष्ठकीटः तेन जग्धं भुक्तं तम् । अद भक्षणे इत्यस्मात् निष्ठा, 'अदो जग्धिर्ल्यप्ति किति' इति अदो जग्धिरादेशः ।

७२ **ग्रन्थिलतमावयवेषु**—ग्रन्थिरस्मिन्नस्तीति ग्रन्थिल । सिध्मादिभ्यश्चेति मत्वर्थे लच्। अयमेषामतिशयेन ग्रन्थिल इति ग्रन्थिलतम । अतिशायने तमप्। ग्रन्थिलतमा अतिशयेन पर्ववन्त, 'ग्रन्थिर्ना पर्वपरुषी' इत्यमर, अवयवा भागा तेषु।

,, **कतिपयवर्षपूर्वम्**—कतिपयेभ्य कतिभ्यश्चित् वर्षेभ्य वत्सरेभ्य पूर्व प्राक् यथा स्यात्तथा।

,, **बलाधिकृत**—बल सैन्य तत्र विषये अधिकृत अधिकारे नियुक्त सेनाधिकारी इत्यर्थ ।

,, **श्रमेण दण्डप्रतिकारिणम्**—श्रमेण श्रमकार्येण दण्ड प्रतिकर्तु प्रतिविधातु शील यस्य तम्। कर्मणा दण्डनिष्क्रयकारिणमित्यर्थ । अत्र 'ऊर्णा-वल्क-कार्पास-तूल-शण-क्षौमाणि च विधवा-न्यगा-कन्याप्रव्रजिता-दण्डप्रतिकारिणीभि
कर्तयेत्' इति कौटलीय प्रयोगो द्रष्टव्य । गणपतिशास्त्रिकृताया तट्टीकाया 'दण्डप्रतिकारिणीभि कर्मणा दण्डनिष्क्रयकारिणीभि' इति व्याख्या च अनुसधेया।

,, **अभितीरम्**—तीरमभि तीरस्याभिमुख वेति अभितीरम्। तट प्रति इत्यर्थ ।

,, **पोताशयस्य**—पोत प्रवहण तस्य आशय विश्रामस्थान तस्य, खातस्य पत्तनोत्सगस्य वेत्यर्थ ।

७३ **पृतनाध्यक्ष**—पृतना सेना तस्या अध्यक्ष अधिष्ठाता। सेनाध्यक्ष इत्यर्थ ।

,, **अविदिततरणविद्य**—न विदिता न ज्ञाता तरणस्य प्लवनस्य, तॄ प्लवनसतरणयो इत्यस्मात् भावे ल्युट्, विद्या कला येन स तथोक्त ।

, **सज्ञासूचकसङ्ख्यासमङ्कितम्**—सज्ञा नाम तस्या सूचिका सकेतिका या सख्या एक-द्वि-त्रिचतुरादिका। 'स्त्रिया पुवद्

भाषितपुस्कात् .. ' इत्यादिसूत्रेण 'सूचिका'शब्दस्य पुवद्भाव। तया समङ्कित सम्यक् चिह्नित तम्।

७३ **अयशस्करपट्टविशेषशालिनम्**—यश कराति इति यशस्कर कीर्ति-जनक इत्यर्थ। 'यश'शब्दे उपपदे करोते हेतौ टप्रत्यय। न यशस्कर इत्ययशस्कर। पट्टाना (पट्टेषु वा) विशेष पट्टविशेष, विशेषप्रकारक पट्ट इत्यर्थ। अयशस्कर य पट्टविशेष तेन शालते शोभते इति तम्। ताच्छील्ये णिनि।

" **परिभवपुरसरम्**—पुर सरतीति पुरसर अग्रेसर इत्यर्थ। 'पुरोऽग्रताऽग्रेषु सर्ते' इति टप्रत्यय। परिभव तिरस्कार पुरसराऽग्रसर यस्मिन् कर्मणि तद्यथा स्यात्तथा। तिरस्कारपूर्वमित्यर्थ।

" **प्रेक्षापातस्य**—प्रेक्षणमेव प्रेक्षा। 'गुरोश्च हल' इति सूत्रेण प्रपूर्वात् ईक्षते स्त्रीलिङ्गे भावे अकार प्रत्यय। स्त्रिया टाप्। प्रेक्षाया दृष्टे पात पातन तस्य। दृष्टिपातस्येत्यर्थ।

" **सौहार्दद्रवरसार्द्रम्**—सुहृदयस्य सुहृदो वा भाव सौहार्दम्, सुहृदयत्वमित्यर्थ। भावेऽण्। 'हृद्भगसिन्ध्वन्ते ' इत्यादिना उभयपदवृद्धि। तदेव द्रव तरलद्रव्य तस्य यो रस तेन आर्द्रं क्लिन्न, सरसमिति यावत्।

" **आदिनवसमुदाये**—आदिनवा दोषा। 'दोष आ(दि)दीनवो मत' इत्यमर। तेषा समुदाय समूह तस्मिन्।

" **स्वात्मनः प्राणान् तृणायापि न मेने**—स्वात्मन स्वस्य प्राणान् जीवनमित्यर्थ तृणायापि न मेने किमपि न गणयाञ्चकार। लेशतोऽपि नाद्रियतेत्यर्थ। 'मन्यकर्मण्यनादरे ' इत्यादिना अनादरार्थे कर्मणि चतुर्थी।

" **बहि प्रतिभासमानरूपेण तद्विषये ... विपश्चिदपश्चिमानाम्**—

कस्यापि कस्यचित् पुम पुरुषस्य बहि वाह्यत प्रतिभासमान प्रतीयमान यद् रूप तेन तद्विषये तस्य पुरुषस्य विपये सवन्धे स्वमत स्व निज मत सम्मति समामनन्त प्रतिपादयन्त, कथयन्त इति यावत्। वय वितथविचारै वितथा असत्या विचारा तै अत्यर्थमत्यधिक वञ्चयिष्यामहे वञ्चिता भविष्याम, वञ्च प्रलम्भने इत्यस्मात् कर्मणि लृट्, इति एतत् विपश्चिदपश्चिमाना विपश्चिता बुद्धिमन्त, तेपा (तेपु वा) अपश्चिमा न पश्चिमा, प्रथमा इत्यर्थ, तेपाम् अपश्चिमम् अविद्यमान पश्चिम परवर्ति यस्मात् तत् तथोक्तम्, चरम परम वेत्यर्थ, वच वचनम् अस्तीति शेष।

केवल बाह्यरूप दृष्ट्वा कस्यापि विषये स्वसम्मति प्रकाशयन्तो वयमत्यन्त वञ्चिता भविष्याम इति विज्ञवराणा परम वचनमित्यभिप्राय।

७३ **मानुषाणामाधर्षितानाम्**—आर्धषिता दण्डिता तेषाम्। आङ्पूर्वात् धृष प्रसहने इत्यस्मात् चोरादिकात् निष्ठा। मानुषाणा मनुष्याणाम्।

" **रुक्माकरखननाधिकृतेन**—रुक्म सुवर्णम्, 'स्वर्ण सुवर्ण कनक रुक्म कार्तस्वर जाम्बूनदमष्टापदोऽस्त्रियाम्' इत्यमर, तस्य य आकर खनि, 'खनि स्त्रियामाकर स्यात्' इत्यमर, तस्य यत् खननम् अवदारण तत्र अधिकृत अधिकारे नियुक्त, तदध्यक्ष इत्यर्थ।

" **सैकतवर्ति-रासायनिकद्रव्य-क्रियाप्रसूतम्** — सिकता वालुका अस्मिन् सन्तीति सैकतम्, सिकतामय तटमित्यर्थ। मत्वर्थेऽण्। 'सैकत सिकतामयम्' इत्यमर। तस्मिन् वर्तन्ते तच्छीलानि इति सैकतवर्तीनि रासायनिकानि रसायनसम्बन्धीनि द्रव्याणि पदार्था तेषा क्रिया पारस्परिकप्रभावरूपा तया

प्रसूतम् उत्पन्नम्।

७४ **तपनीयपण्यवीथिम्**—तपनीय स्वर्णम्। 'स्वर्ण सुवर्ण कनक तपनीय शातकुम्भम्' इत्यमर। तस्य पण्यवीथि विपणि, आपणपङ्क्तिरित्यर्थ ताम्। 'विपणि पण्यवीथिका' इत्यमर।

, **प्राप्तनिस्तारौ**—प्राप्त निस्तार उद्धार याभ्या तौ, बन्धनात् निर्मुक्तो इत्यर्थ।

,, **आ परिशेषायुष**—'आ (आङ)' इत्यव्यय मर्यादाभिविध्यो। परिशेषम् अवशिष्टम् आयु वय इति परिशेषायु। आ परिशेषायुष परिशेषायु पर्यन्तमित्यर्थ। 'पञ्चम्यपाङ-परिभि' इत्यनेन आङयोगे पञ्चमी। 'आङ'पदमत्र अभि-विधौ बोध्यम्, तमभिव्याप्य (तेन सहेत्यर्थ) अभिविधि-रिति तल्लक्षणात्।

,, **प्रायश्चित्तालयान्**—प्रायश्चित्त पापापनोदक कर्म। 'प्रायो नाम तप प्रोक्त चित्त निश्चय उच्यते। तपोनिश्चय-सयोगात् प्रायश्चित्तमितीर्यते' इति हेमाद्रि। तस्य तद-नुष्ठानस्येत्यर्थ ये आलया गृहाणि तान्। प्रायश्चित्तानु-ष्ठानगृहाणि इत्यर्थ।

,, **निषद्वरदूषित**—निषद्वर पङ्क, 'निषद्वरस्तु जम्बाल पङ्कोऽस्त्री शादकर्दमौ' इत्यमर, तेन दूषित कलुषित। दुष वैक्ल-व्ये इत्यस्मात् णिजन्तात् निष्ठा।

,, **जीवितसशयभाज**—जीवित जीवन तस्य सशय जीवनमरण-सदेह इत्यर्थ त भजन्ति प्राप्नुवन्ति इति ते। भजेर्ण्वि।

,, **द्वीपवतीपारवर्तिन हॉलैण्डदेशोपनिवेशम्**—द्वीपा सन्ति अस्या-मिति द्वीपवती नदी। 'नदी सरित् स्रोतस्वती द्वीप-वती' इत्यमर। तस्या यत् पार परतीर तत्र वर्तते विद्यते इति त तथाभूत हॉलैण्डदेशोपनिवेशम् हॉलैण्डनामको यो देश

तस्य उपनिवेश उपस्थापित जनपद तम्। अत्राह कौटिल्य —"भूतपूर्वमभूतपूर्वं वा जनपद परदेशाऽपवाह-नेन स्वदेशाऽभिष्यन्दवमनेन वा निवेशयेत्" इति। नदी-पारस्थित हॉलैण्डदेशस्योपनिवेशमित्यर्थ ।

७४ **अपक्रमपरौ**—अपक्रम अपयान, पलायनमिति यावत्, 'अपक्रमो-ऽपयान च' इत्यमर। तस्मिन् परौ परायणौ। पलाय-मानौ इत्यर्थ।

" **अस्मत्सात्कृतम्**—अस्मदधीन कृतमिति अस्मत्सात्कृतम्। 'तद-धीनवचने' इति सूत्रेण तदधीनत्वे वाच्ये अस्मच्छब्दात् साति प्रत्यय।

७५ **न हि सम्प्रधार्या सम्मतिरसमीक्षिता कमप्यभिलक्ष्य**—कमपि कञ्चिदपि मनुष्यम् अभिलक्ष्य विषयीकृत्य, तद्विषये इत्यर्थ, असमीक्षिता अविचारिता सम्मति मत न सम्प्रधार्या निश्चेतव्या। हि इत्यवधारणे।

" **वर खलु . निर्वहणम्**—शक्य सभाव्यमनतिक्रम्येति यथाशक्य यथाशक्ति इत्यर्थ। सम्मतिनिर्धारण सम्मते मतस्य निर्धारण स्थिरीकरणम् अन्तरा विना एव स्वकार्यनिर्वहण स्व निज यत् कार्य कर्म तस्य निर्वहण सपादन वर मनाक्-प्रियम्, 'देवाद् वृते वर श्रेष्ठे त्रिषु क्लीब मनाक्प्रिये' इत्यमर। खलु इति वाक्यालकारे। 'निषेधवाक्यालकार-जिज्ञासाऽनुनये खलु' इत्यमर। अय भाव—यावद् वय परेषा विषये स्वमतावधारण विनैव स्वकार्य कर्तु शक्नुम तावद् अस्माभि तेषा विषये स्वमतावधारण नैव करणीयम् इत्येतद् वर खलु।

७६ **आर्यावर्तवास्तव्यानाम्**—आर्या आवर्तन्ते अत्रेति आर्यावर्त पुण्या भारतभूमि। 'आर्यावर्त पुण्यभूमिर्मध्य हिमवद्विन्ध्ययो' इत्यमर। तथा च मनु—'आ समुद्रात्तु वै पूर्वादा समु-

द्राच्च पश्चिमात्। तयोरेवान्तर गिर्यो (हिमवद्विन्ध्ययो) आर्यावर्त विदुर्बुधा ॥' वमन्तीति वास्तव्या निवासिन इत्यर्थ । 'वसेस्तव्यत् कर्तरि णिच्च' इति तव्यत्। आर्यावर्तस्य वास्तव्या निवासिनस्तेषाम्।

७६ **विश्वमूलवर्तिव्यवस्थाविषयक**—विश्वस्य जगतो मूलमिति विश्वमूलम्। तत्र वर्तते निष्ठतीति तच्छीला व्यवस्था क्रमविशेष विषयो यस्य स तथोक्त । 'शेषाद्विभाषा' इति कप् प्रत्यय । जगन्मूले वर्तमानाया व्यवस्थाया विषये इत्यर्थ ।

" **अस्मदावासभूता**—अस्माक मनुष्याणाम् आवास निवासस्थान भूता इति अस्मदावासभूता। सुप्सुपेति समास । अस्मद्वासस्थानरूपेत्यर्थ ।

" **मेखलायमान**—मेखला रशना। 'स्त्रीकटचा मेखला काञ्ची सप्तकी रशना तथा' इत्यमर । सा इवाचरतीति मेखलायमान । आचारार्थे क्यङ। ङित्त्वादात्मनेपदम्।

" **वस्तुसत्तावत**—वस्तुन सत्ता वस्तुसत्ता वास्तविकी सत्ता इत्यर्थ । यद्वा, वस्तुतोऽस्तीति वस्तुसत् तत्त्वादि, तस्य भाव तत्ता। सा एषामस्तीति तान् वस्तुसत्तावत वास्तविकान् इत्यर्थ ।

" **भङ्गिमात्रम्**—भङ्गि वक्रोक्ति, 'भङ्गी स्याद् वक्रभाषितम्' इति वैजयन्ती। भङ्गिरेव इति भङ्गिमात्रम्, व्यञ्जनशैलीविशेषमात्रम् इत्यर्थ । 'मयूरव्यसकादयश्च' इति सूत्रेण 'मात्र'शब्देन सह 'भङ्गि'पदस्य नित्यसमास ।

७७ **सृष्टचुत्पत्तिप्रसङ्गे**—सृष्टे (सृष्टचा वा) उत्पत्ति जन्म, उद्भव इति यावत्, तस्या प्रसङ्ग प्रकरण तस्मिन्।

" **निधित्सु**—निधातु स्थापयितुमिच्छु । डुधाञ् धारणपोषणयो (दानेऽप्येके) इत्यस्मात् निपूर्वात् इच्छाया सन्। तत 'सनाशसभिक्ष उ' इति सूत्रेण कर्तरि उप्रत्यय ।

७७ **तत्समनन्तरम्**–नास्ति अन्तर व्यवधान यस्मिन् कर्मणि तत् अनन्तरम्। सम्यगनन्तरम् इति समनन्तरम्। तस्मात् समनन्तर पश्चात् यथा स्यात्तथा। तस्य पश्चादित्यर्थ। 'क्रियाविशेषणाना च क्लीबतेष्यते' इति वार्तिकेन क्लीबत्वम्।

" **बाइबलकथनानुसारम्**–'बाइबल'स्य ख्रीष्टीयधर्मग्रन्थस्य यत् कथन वचन तस्य अनुसार अनुसरण यस्मिन् कर्मणि तद्यथा स्यात्तथा।

" **अनुदिवसम्**–दिवस दिवसमनु इति अनुदिवस प्रतिदिनमित्यर्थ। वीप्सायामव्ययीभाव।

" **अजनिष्ट**–अजायत, उत्पन्न इत्यर्थ। जनी प्रादुर्भावे इत्यस्य लुङ्प्रथमपुरुषैकवचनम्।

" **व्यधायितमाम्**–अकारितमाम्, अतिशयेन कृतमित्यर्थ। विपूर्वाद् दधाते कर्मणि लुङ्प्रथमपुरुषैकवचने व्यधायि इति रूपम्। ततश्च 'इदमेषामतिशयेन व्यधायि' इति विग्रहे अतिशायने तमप्। 'किमेत्तिङव्यय ' इत्यादिसूत्रेण तमबन्ताद् आमुप्रत्यय।

" **मानचित्रम्**–मानस्य परिमाणस्य चित्रमालेख्यम्, 'नक्शा' इति भाषाया प्रसिद्ध देशादेरालेख्यपत्रमित्यर्थ।

" **समसञ्चारम्**–सम समान, नियमित इति यावत्, सञ्चार गतिस्तम्।

" **अभिदधाति तान् अभिधाभि**–तान् खेचरान् ज्योतीषि वा अभिधाभि नामभि अभिदधाति आह्वयति, तेषा नामानि करोति, तान् नामभिर्निर्दिशति वेत्यर्थ।

७८ **प्रभाकरपरिक्रामिणाम्**–प्रभा प्रकाश करोतीति प्रभाकर सूर्य। हेतौ ताच्छील्ये वा करोतेष्ट। त परित क्रमितु सचरितु शील येषा तेषाम्।

" **उपरागमाप्स्यति**–उपरागो ग्रह, राहुणा चन्द्रस्य सूर्यस्य वा

ग्रास इत्यर्थ । 'उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च' इत्यमर । तम् आस्यति उपयास्यति । राहुग्रस्तो भविष्यतीत्यर्थ ।

७८ **व्यवस्थातत्त्वबोधनिबन्धनम्**—व्यवस्था क्रम तस्या तत्त्व रहस्यमिति व्यवस्थातत्त्वम् । तस्य बोध ज्ञानम् एव निबन्धनमाधारो यस्य तत् तथोक्तम् ।

" **अत्यन्तशिशवे**—अत्यन्तमत्यधिक शिशुर्लघु तस्मै इति 'बालकाय' इत्यस्य विशेषणम् । विशेष्यविशेषणयो समास ।

" **स्फटिकगुटिकाभि**—स्फटिको मणिविशेष तस्य गुटिका गुलिका (गोली इति नाम्ना भाषाया प्रसिद्धा) ताभि ।

" **असबद्धप्रलापमात्रम्**—असबद्ध असगत प्रलाप जल्पनमिति असम्बद्धप्रलाप । स एवेति असबद्धप्रलापमात्रम् । मयूर-व्यसकादयश्चेति समास ।

" **कञ्चिदपि क्रममन्तरेण**—कञ्चिदपि कमपि क्रमम् आनुपूर्वी, व्यवस्थामित्यर्थ, अन्तरेण विना । 'पृथग्विनान्तरेणर्ते' इत्यमर । 'अन्तरान्तरेण युक्ते' इति द्वितीया ।

" **आनुपूर्व्येण**—अनुगत पूर्वम् (क्रम परिपाट्यादिक वा) इति अनुपूर्व, 'अत्यादय क्रान्ताद्यर्थे द्वितीयया' इति समास । तस्य भाव आनुपूर्व्यम् अनुक्रम इत्यर्थ तेन । भावे ष्यञ् ।

" **सुष्ठु समीशते समस्वरता स्रष्टुम्**—सम सगत (समन्वितो वा) स्वर निषादर्षभादि मधुरध्वनि यस्मिन् (सगीतादौ) तत् समस्वरम् । तस्य भावस्तत्ता ताम्, एकस्वरतामित्यर्थ, स्रष्टु जनयितु सुष्ठु सम्यक् समीशते शक्नुवन्ति । सम्पूर्वात् ईश ऐश्वर्ये इत्यस्मात् लट्प्रथमपुरुषबहुवचनम् ।

" **पुरुषोपज्ञानामन्यविज्ञानानाम्**—पुरुषस्य मनुष्यस्य उपज्ञा इति पुरुषोपज्ञानि । षष्ठीतत्पुरुष । 'उपज्ञोपक्रम तदाद्याचिख्यासायाम्' इति नपुसकलिङ्गत्वम् । पुरुषोपज्ञाना पुरुष-

स्य उपज्ञानेन प्रथमत आविष्कृतानाम् अन्यविज्ञानानाम् अन्येषाम् अपरेषा विज्ञानाना विद्यानाम् (यद्वा, अन्यानि अपराणि विज्ञानानि विद्यास्तेषाम्।)

७९ **रेणुरूषितानि**—रेणुना धूल्या रूषितानि छुरितानि, धूलिधूसरितानि इति यावत्। रूष भूषायामित्यस्मात् निष्ठा।

" **पस्त्यपरिबर्हेषु**—पस्त्य गृहम्। 'गृह गेहोदवसित निशान्त-पस्त्यसदनम्' इत्यमर। तस्य परिबर्हा राजयोग्योपकरणानि तेषु, गृहोपकरणेष्वित्यर्थ। 'परिच्छदे नृपार्हेऽर्थे परिबर्ह' इत्यमर।

" **युष्मदङ्गुलिजातम्**—युष्माकम् अङ्गुलय युष्मदङ्गुलय, तासा जात समूह तत्।

" **तत्तत्पुस्तकादिसमतिरिक्तम्**—तानि च तानि चेति तत्तानि अमुकामुकानि इत्यर्थ, पुस्तकानि आदौ येषा तानि पुस्तकादीनि द्रव्याणीति शेष। तत्तानि पुस्तकादीनि इति तत्तत्पुस्तकादीनि, तेभ्य समतिरिक्त भिन्नम्।

" **समाध्रियते**—अवलम्बते। सम्+आङ्पूर्वात् धृङ अवस्थाने इत्यस्मात् तौदादिकात् लट्, यद्वा, धृ धारणे इत्यस्मात् भौवादिकात् समाङ्पूर्वात् कर्मकर्तरि लट्।

" **विधिव्यवस्थासरक्षणम्**—विधिर्नियम व्यवस्था मर्यादा लोकप्रतिष्ठा वा तयो सरक्षण रक्षा।

" **देशाधिशासितु**—देशस्य राष्ट्रस्य अधिशासिता शासक तस्य। अधिपूर्वात् शासु अनुशिष्टौ इत्यस्मात् कर्तरि तृच्।

" **आ सम्राज ....आहीनतमराजपुरुषम्**—सम्राट् मण्डलेश्वर। 'येनेष्ट राजसूयेन मण्डलस्येश्वरश्च य। शास्ति यश्चाज्ञया राज्ञ स सम्राट् ' इत्यमर। तस्मात् आ आरभ्य। आडित्यव्ययम् अत्र अभिव्याप्तौ। 'आडीषदर्थेऽभिव्याप्तौ सीमार्थे' इत्यमर। अभिव्याप्तेर्लक्षण तु 'तत्सहितोऽभि-

व्याप्ति' इति। राज्ञ नृपात् आ प्रभृति। राष्ट्रपते राष्ट्रस्य देशस्य पति प्रभु तस्मात् वा आ आरभ्य। अय-मेषामतिशयेन हीन इति हीनतम अवरतम लघुतमो वा। राज्ञ पुरुष राजपुरुष। हीनतमात् राजपुरुषात् राजकर्म-चारिण आ इत्याहीनतमराजपुरुषम्, तत्पर्यन्तमित्यर्थं। 'आङ मर्यादाभिविध्यो' इत्यव्ययीभाव।

७९ **व्यवस्थासरक्षण . . देयमेव**—व्यवस्थाया स्थिते, मर्यादाया इत्यर्थ, यत् सरक्षण रक्षा तस्य यत् कर्म कार्यं तस्मिन् हस्तावलम्बन हस्तस्य अवलम्बनमाश्रय स्वसाहाय्यमित्यर्थ, देय प्रदातव्यम् एव। एवकारोऽवधारणे। तस्मिन् सहायताऽवश्य दातव्या इत्यर्थं।

८० **व्यवस्थाभङ्ग . . जनयेत्!**—व्यवस्थाया मर्यादाया भङ्ग उल्लङ्घन कीदृशान् क इव दृश्यन्ते इति कीदृशा किंविधा तान्, आश्चर्यकरान् इत्यर्थं, भीषणपरिणामान् भीषणा भयानका परिणामा फलानि तान् जनयेत् उत्पादयेत्! अत्यन्तभयङ्करान् परिणामान् उत्पादयेत् इत्यर्थं।

" **स्थेशननियुक्तनियोगिगवर्गस्य**—स्था स्थिति तत्र ईष्टे वाष्पयान-स्थितौ प्रभवतीति स्थेशनम्। वाष्पयानावस्थितिस्थल-मित्यर्थं। ईशतेर्ल्युट्। तत्र नियुक्ता कर्मणि व्यापारिता ये नियोगिन कर्मचारिण, सेवका इति यावत्, तेषा वर्ग समूह तस्य।

" **वाष्पयानवाहक**—वाष्पयान लोहपथे जलवाष्पेण उह्यमानो यानविशेष तस्य वाहक चालक।

" **लोहपथपरिवर्तयिता**—लोहस्य लोहनिर्मित इत्यर्थ य पन्था मार्ग तस्य परिवर्तयिता परिवर्तक। वाष्पयानमेकस्मात् लोहपथात् अन्यलोहपथे परिवर्तयितु नियुक्त कर्मचारी लोहपथपरिवर्तयिता बोद्धव्य।

८० **सविशेषावेक्षणम्**–विशेष विशिष्टम् अवेक्षणमवधान तेन सह यथा स्यात्तथा। योगपद्येऽर्थेऽव्ययीभाव । 'अव्ययीभावे चाकाले' इति सहस्य स ।

" **पलविपलविपर्यासमन्तरा**–पलश्च विपलश्चेति तयोर्य विपर्यास अन्तर, क्षणनिमिषपरिमितमन्तरमित्यर्थ, तमन्तरा विना।

" **नियमसमयादिव्यवस्थाया**–नियम समयश्च आदौ यस्या एवभूता व्यवस्था मर्यादा तस्या ।

" **अवसादकरा उदर्का**–अवसाद विनाश कुर्वन्तीति अवसादकरा विनाशकारिण इत्यर्थ । हेतौ द्योत्ये करोतेष्ट । तथाभूता उदर्का परिणामा ।

" **व्यमर्शि**–व्यचारि, विचारितमित्यर्थ । विपूर्वात् मृश आमर्शने इत्यस्मात् कर्मणि लुङ।

८१ **अविकलमाकलनम्**–विगता कला यस्मात् तत् विकल न्यूनम् अपूर्ण वा। न विकलमित्यविकल न्यूनतारहितम्, पूर्णमित्यर्थ । आकलन मख्यान, ज्ञानमित्यर्थ, आङपूर्वात् कल गतो सख्याने च इत्यस्मात् भावे ल्युट्।

" **वशक्रमागतवेश्मनि**–वशस्य कुलस्य य क्रम परम्परा तस्मात् आगत प्राप्त वेश्म गृह तस्मिन्। पितृपितामहादिपरम्परया प्राप्ते गृहे इत्यर्थ ।

" **निमिषमितम्**–निमिषेण क्षणेन मित परिमित तम्। क्षणपरिमितमित्यर्थ ।

" **परस्परपूरकत्वेन प्रवर्तेते**–परस्परस्य अन्योन्यस्य पूरक पूरयिता तस्य भावस्तत्त्व तेन सह युगपत् समकाल प्रवर्तेते भवत इत्यर्थ ।

" **यथायथम्**–यथास्वम्, स्वभावमनतिक्रम्येत्यर्थ । 'यथास्वे यथायथम्' इति निपातनाद् द्विर्भावो नपुसकत्व च। 'ह्रस्वो नपुसके प्रातिपदिकस्य' इति ह्रस्वत्वम्। 'यथास्व तु यथा-

यथम्' इत्यमर ।

८१ **समन्विति**–समन्वय, सुसङ्गतिरित्यर्थ । सम्+अनुपूर्वात् इण् गतौ इत्यस्मात् स्त्रीलिङ्गे भावे क्तिन् ।

८२ **दन्ता**–दन्तशब्दोऽत्र चक्रनेमेर्दन्तेषु वर्तते । तेषा दन्तसदृशत्वात् दन्तशब्दस्तेषूपचर्यते ।

" **उद्यामा**–उद्यमयन्ति उत्तोलयन्तीति उद्यामा उत्तोलनदण्डा इत्यर्थ । भारवद्वस्तूनामुत्तोलनाय उपयुज्यमानानि उपकरणानि इति यावत् ।

" **कर्षणी**–भ्रमि, व्यावर्तनकील वलयकीलको वा, 'पेच' इति हिन्दीभाषाया प्रसिद्ध ।

" **यन्त्रगतिनियामकगुरुचक्रवत्**–यन्त्रस्य या गति चलन तस्या नियामक नियन्त्रक यद् गुरु बृहत् चक्र प्रचक्रमिति यावत् तेन तुल्य वर्तते इति तद्वत् । 'तेन तुल्य क्रिया चेद्वति' इति तुल्यार्थे वतिप्रत्यय ।

" **विशालविश्वाङ्गभूतस्य**–विशाल बृहत् विश्व जगत् इति विशालविश्वम् । तस्य अङ्गम् अवयव इति विशालविश्वाङ्गम् । तद् भूत सजात तस्य । 'विशालविश्वाङ्ग' इति समस्तपदेन सह 'भूत'शब्दस्य 'सुप्सुपा' इति सूत्रेण समास । विशालजगदङ्गस्वरूपस्येत्यर्थ ।

" **स्वोदवसितस्य**–स्व निजम् उदवसित गृह तस्य । 'गृह गेहोदवसितम्' इत्यमर ।

" **व्यवस्थामयजीवनाभ्यासः**–व्यवस्था प्रकृता उच्यते अस्मिन् इति व्यवस्थामय क्रमबद्धमित्यर्थ । 'तत्प्रकृतवचने मयट्' इति मयट् । तथाभूत जीवन तस्य अभ्यास पुन पुनरनुशीलनम् ।

" **शिक्षितुमीश्यते**–शिक्षितुमभ्यसितुम् ईश्यते शक्यते । एतत् सर्वं वय शिक्षितु शक्नुम इति भाव ।

८२ **सुनियतरीत्या**–सुष्ठु सम्यग् वा नियता इति सुनियता। 'कुगतिप्रादय' इति सूत्रेण नित्य तत्पुरुषसमास । सुनियता रीति विधि तया।

" **उत्तरोत्तरम्**–उत्तरस्मात् उत्तर यथा स्यात्तथा। अधिकाधिकमित्यर्थ ।

" **पादचारम्**–पादाभ्या चरणाभ्या चारश्चलनम् तम्।

" **गमनधावनात्मक**–गमन चलन धावनमतिवेगेन क्रमण गमन वा। गमन च धावन च आत्मा स्वरूप यस्य स तथोक्त । गमनधावनस्वरूप इत्यर्थ ।

" **यत्सत्यम् एवमभ्यस्यता पुसाम्**–यत्सत्यमित्यव्यय सत्यार्थे निश्चयार्थे च। यत्सत्य सत्यमेवैतत् यत् एवमनेन प्रकारेण अभ्यस्यताम् अभ्यास कुर्वता पुसा मनुष्याणाम्।

८३ **प्रतिवेशिवेश्म**–प्रतिवेशिन प्रतिवासिन स्वगृहसमीपवासिन इत्यर्थ वेश्म गृहम्।

" **अध्वगसङ्घेन सह**–अध्वान मार्ग गच्छन्तीति अध्वगा यात्रिण । 'अन्तात्यन्ताध्व ' इत्यादिना गमेर्डप्रत्यय । तेषा सङ्घ समूह तेन सह। 'सहयुक्तेऽप्रधाने' इति तृतीया।

" **प्रतिवासिपस्त्यम्**–प्रतिवासी प्रतिवेशी स्वगृहसमीपवासीत्यर्थ । तस्य पस्त्य गृहम्। 'गृह गेहोदवसित निशान्तपस्त्यसदनम्' इत्यमर ।

" **सधुक्षिताङ्गारान्**–सधुक्षिता प्रदीप्ता । धुक्ष सदीपनक्लेशनजीवनेषु इत्यस्मात् क्त। अङ्गारा उल्मुकानि तान्। 'अङ्गारोऽलातमुल्मुकम्' इत्यमर ।

" **विषमीभूतपद**–अविषम विषम भूतम् इति विषमीभूतम् उच्चावचेषु निपतितम्, स्खलितमिति यावत्, पद चरण यस्य स तथोक्त ।

८४ **निर्मास्यमानमन्दिरादे**–निर्मास्यते इति निर्मास्यमान विरचयिष्य-

माणमित्यर्थ । 'निर्' इति पूर्वात् मा माने इत्यस्मात् आदादिकात्, माङ माने शब्दे च इति जुहोत्यादिगणीयाद्वा, माङ माने इति दैवादिकात् वा कर्मणि लृट शानच्। निर्मास्यमान मन्दिरादि मन्दिरमादौ यस्य तत् तथोक्त वास्तुजातमिति शेष तस्य। 'तृतीयादिषु भाषितपुंस्क पुवद् गालवस्य' इति समस्तपदस्य पाक्षिक पुवद्भाव, यद्वा, निर्मास्यमानमन्दिरादे 'भवनसमूहस्य इति शेष' इति पुल्लिङ्ग विशेष्य परिकल्प्य अर्थयोजना कार्या।

८४ **वेश्मप्रतिष्ठाम्**—वेश्म गृहम्। 'गृह गेहोदवसित वेश्म सद्म निकेतनम्' इत्यमर। तस्य प्रतिष्ठा आधारशिला ताम्।

" **आवश्यककार्यकोटिम्**—आवश्यकानि कार्याणि इत्यावश्यककार्याणि तेषा कोटि श्रेणी ताम्।

" **नवजातशिशु**—'नव'पदमत्र क्रियाविशेषणम्। नवम् सद्य इत्यर्थ जात उत्पन्न शिशु बाल।

" **परासुतामित**—परागता नि सृता असव प्राणा यस्य तस्य भावस्तत्ता ताम्, मृत्युमित्यर्थ, इत प्राप्त। इण् गतौ इत्यस्मान्निष्ठा।

" **दयान्विता**—दयया करुणया अन्विता युक्ता। अनुपूर्वात् इण् गतौ इत्यस्मात् क्तप्रत्यय, स्त्रिया टाप्।

८५ **दयार्द्रहृदया**—दयया हेतुना आर्द्र क्लिन्न, द्रवीभूतमिति भाव, हृदय यस्या सा।

" **निरपत्य**—निर्नास्ति अपत्य सन्ततिर्यस्य स, यद्वा, निर्गतम् अपत्य यस्मात् स, सतानरहित इत्यर्थ।

" **अनवगतगोत्रम्**—न अवगतमित्यनवगतम्। अनवगतम् अज्ञात गोत्र वशो यस्य तम्।

" **अज्ञातकुलशीलम्**—न ज्ञाते इति अज्ञाते। कुलञ्च शीलञ्चेति कुलशीले। अज्ञाते अविदिते कुलशीले वशस्वभावौ यस्य

तम्। 'शील साधुवृत्तस्वभावयो' इत्यनेकार्थ ।

८५ **तत्परिग्रहवासरात्प्रभृति**–तस्य शिशो य परिग्रह आदानम्, अङ्गीकार इति यावत्। 'पत्नीपरिजनादानमूलशापा परिग्रहा' इत्यमर । तस्य वासर दिन तस्मात् प्रभृति आरभ्य।

" **भर्त्सयितुम्**–तर्जयितुम्, अपकारपर वचनमुच्चारयितुमित्यर्थ । भर्त्स तर्जने इत्यस्मात् चौरादिकात् तुमुन्। 'भर्त्सन त्वपकारगी' इत्यमर ।

" **भास्वत्प्रतिभ**–भास्वती समुज्ज्वला प्रतिभा नवनवोन्मेषशालिनी प्रज्ञा यस्य स । 'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता' इति अभिनवगुप्ताचार्या ।

" **प्राप्तवया**–प्राप्त वय आयुर्येन स, वयस्थ, तरुण इति यावत्।

" **परिहृतापरसहाय**–परिहृता त्यक्ता अपरे अन्ये सहाया येन स, एकाकी इत्यर्थ ।

" **तालतरोरवस्तादस्वाप्सीत**–तालतर तृणराज । 'तृणराजाह्वयस्ताल' इत्यमर । यद्वा, ताल तालफल, तस्य तरु वृक्ष तस्य अवस्तात् अध । 'अवरस्मिन्' इत्यर्थे 'दिक्शब्देभ्य सप्तमी ' इत्यादिना अस्तातिप्रत्यय । 'विभाषाऽवरस्य' इति सूत्रेण अवरस्य 'अव्' इत्ययमादेश । अस्वाप्सीत् सुप्त । ञिष्वप् शये इत्यस्य लुङ्प्रथमपुरुषैकवचनम्।

" **महिलामतल्लिका**–प्रशस्ता महिला महिलामतल्लिका। 'मतल्लिका-मचर्चिका-प्रकाण्डमुद्घतल्लजौ, प्रशस्तवाचकान्यमूनि ' इत्यमर । एते 'उद्घादयश्च नियतलिङ्गा न तु विशेष्यलिङ्गा' इति सिद्धान्तकौमुदी।

" **सुदीर्घकाण्ड**–सु इत्यव्ययमतिशयार्थे। अतिशयेन दीर्घ इति सुदीर्घ । एवभूत काण्ड स्कन्ध यस्य स तथोक्त । 'अस्त्री प्रकाण्ड स्कन्ध स्यान्मूलाच्छाखावधिस्तरो' इत्यमर ।

८७ **जनश्रुति**—जनेषु श्रूयते (वार्तारूपेण) इति जनश्रुति, लोक-प्रवाद, किंवदन्ती इत्यर्थ । 'किंवदन्ती जनश्रुति' इत्यमर

८९ **कमनीय'कुरल' आसीत्**—कमनीय सुन्दर यत् 'कुरल'काव्य 'कुरल्' इत्येतन्नामक काव्य तस्य कर्त्ता रचयिता तेन, कीर्त्ति-मता कीर्तिरस्यास्तीति कीर्तिमान् यशस्वी तेनैवविधेन तमिलस्य तमिलभाषाया कविना कवयित्रा भाव्य भवितव्यमासीत् जवर्तेन । स हि सुन्दरस्य कुरल्नामकस्य काव्यस्य कर्ता, विख्यात तमिलकविर्भविष्यतीति निश्चितमासीदिति भाव ।

" **सौभाग्यजुष**—सुभगस्य भाव सौभाग्य, शुभभाग्यमिति यावत् । भावे ष्यञ् । तज्जुषन्ते सेवन्ते इति ते, सौभाग्यशालिन इत्यर्थ । क्विप् चेति क्विप्प्रत्यय ।

" **पशुसहस्राधिपति**—पशूना गोवृषभादीना सहस्र दशशत तस्य अधिपति स्वामी ।

" **सुविस्तृतसस्यभूस्वामी**—सुविस्तृता अतिविस्तीर्णा या सस्यभू सस्यस्य अन्नस्य भूर्भूमि तस्या स्वामी ।

" **तज्जनपदोपान्तेषु**—जनपदो ग्राम । स जनपद इति तज्जन-पद । तस्य उपान्ता परिसरा तेषु, तस्य ग्रामस्य प्रान्तभूमौ इत्यर्थ ।

" **पर्यालीकरोति स्म**—हिनस्ति स्म, व्यापादयति स्म । 'पर्याली' इति निपात हिसनार्थं ऊर्यादिगणे सिद्धान्तकौमुद्या पठित । तस्य कृभ्वस्तिभिर्योगे 'ऊर्यादिच्विडाचश्च' इति सूत्रेण गति-सज्ञा । 'कुगतिप्रादय' इति समास ।

" **तन्निवसथवासिनाम्**—निवसथो ग्राम । स निवसथ इति तन्नि-वसथ । तस्मिन् वसन्ति इति तन्निवसथवासिन, तेषाम् । ताच्छील्ये णिनि ।

" **नितमामताम्यन्**—नितमामत्यधिकम् । 'नि' इत्यव्ययात् अति-शायने तमप् । तमबन्तात् 'किमेत्तिङव्यय ' इति

सूत्रेण आमु । अताम्यन् अखिद्यन्त, दु खिता अभवन् इत्यर्थ । तमु काङ्क्षाया खेदे च इत्यस्मात् लङ्प्रथमपुरुष-बहुवचनम् ।

८७ **अप्राक्षीत्**–अपृच्छत्, पृष्टवान् । प्रच्छ ज्ञीप्सायामित्यस्य लुङ्-प्रथमपुरुषैकवचनम् ।

" **मन्त्रान्त्समाम्नाय**–मन्त्रान ऋच समाम्नाय उच्चार्य । सम्+आङ्पूर्वात् म्ना अभ्यासे इत्यस्मात् क्त्वाप्रत्यय । क्त्वो ल्यप् ।

" **कतिपयवत्सरात्यये**–कतिपये (कतिपया वा) कतिचित् वत्सरा वर्षाणि तेषाम् अत्यय अपगम तस्मिन् । व्यतीतेषु कतिपय-वर्षेषु इत्यर्थ ।

" **कुञ्जाभ्यन्तरोपलब्धबालेन**–कुञ्ज निकुञ्ज लताद्याच्छादित-गर्भ स्थानम् इत्यर्थ । 'निकुञ्जकुञ्जौ वा क्लीबे लतादि-पिहितोदरे' इत्यमर । तस्य यत् अभ्यन्तरम् अन्तरालम्, 'अभ्यन्तर त्वन्तरालम्' इत्यमर, तस्मात् उपलब्ध प्राप्त बाल शिशु तेन ।

" **उपकारात्पर लोके परम्**–लोके ससारे उपकारात् परहितात् परम् उत्कृष्टतर परम् अन्यत् सुकृत सत्कर्म, पुण्यमिति यावत्, दुर्लभ दु खेन लब्धु शक्य, दुष्प्रापमित्यर्थ । उपकार परम पुण्यमिति भाव ।

" **सनाथीक्रियतामिदमासनम्**–इदम् एतत् आसन पीठम् । 'पीठ-मासनम्' इत्यमर । सनाथीक्रियताम् असनाथ सनाथ यथा सम्पद्यते तथा क्रियताम्, अलङ्क्रियतामित्यर्थ ।

" **पर्याकुलीकृत्य**–परित आकुल पर्याकुल । कुगतिप्रादय इति समास । अपर्याकुलम् पर्याकुल कृत्वा इति पर्याकुलीकृत्य, व्याकुल कृत्वा इत्यर्थ । 'पर्याकुल'शब्दात् अभूततद्भावे च्वि । 'अस्य च्वौ' इति अकारस्य ईकारादेश । क्त्वो ल्यप् ।

८७ **निग्रहीतुमीहमाना**—निग्रहीतु वशीकर्तुम् ईहमाना कामयमाना ।
८८ **मदोदग्रा**—मदेन गवण हेतुना उदग्रा उद्धता इत्यर्थ ।
" **अवाक्शिरस**—अवाक् अधोमुख शिरो मूर्धा येषा ते। लज्जानतशिरस इत्यर्थ ।
" **परोत्कर्षासहिष्णव**—परस्य अन्यस्य य उत्कर्ष उन्नति तस्य असहिष्णव असहनशीला । 'अलकृञ्निराकृञ्प्रजन ' इत्यादिना सह तच्छीले कर्तरि इष्णुच् ।
" **व्रीडावनतवदना**—व्रीडया लज्जया हेतुना अवननम् अवाक्, अवनम्रमित्यर्थ, वदन मुख येषा ते। लज्जयाऽधोमुखा इति भाव ।
" **जलनिस्यन्दि-तनव**—जल निस्यन्दयति प्रस्रावयति इति जलनिस्यन्दिनी। स्यन्दू प्रस्रवणे इत्यस्मात् णिजन्तात् ताच्छील्ये णिनि । स्त्रियां नान्तलक्षणो ङीप्। तथाभूता तनु शरीर येषा ते। 'स्त्रियाः पुवद् भाषितपुस्कात् ' इत्यादिना सूत्रेण 'निस्यन्दिनी' शब्दस्य पुवद्भाव ।
" **कावेरीपाक्कम्-दैत्यमृत्योर्दुर्मनायिता**—कावेरीपाक्कम एतदाख्यस्य ग्रामस्य य दैत्य राक्षस तस्य मृत्युर्मरण तस्मात् हेतो दुर्मनायिता अदुर्मनस दुर्मनसो भूता इति दुर्मनायिता, दु खीभूता इत्यर्थ । 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हल ' इति सूत्रेण भवत्यर्थे क्यङ्।
" **सदसद्वस्तुसमन्वित**—सन्ति प्रशस्तानि, असन्ति अप्रशस्तानि, कुत्सितानि इत्यर्थ । सन्ति च असन्ति चेति सदसन्ति यानि वस्तूनि तै समन्वित युक्त ।
" **तत्सदाशयकवि**—सन्त उत्तमा आशया भावा यस्य स सदाशय । स सदाशय सद्भावयुक्त कवि इति तत्सदाशयकवि ।
" **अलन्तमा**—अलमित्यव्यय सामर्थ्यादिवाचकम्। इमे एषामतिशयेन अल समर्था इत्यलन्तमा, समर्थतमा इत्यर्थ ।

'अलम्'पदात् अतिशायने तमप्।

८८ **बृहतितराम्**–अतिशयेन वर्धते। बृहि वृद्धौ शब्दे च इत्यस्मात् लट्। तत 'इदमनयोरतिशयेन बृहति' इति विग्रहे 'द्विवचनविभज्योपपदे ' इत्यादिसूत्रेण तरप्। तरबन्तादामुप्रत्यय ।

" **अप्रतिबुद्धधिय**–न प्रतिबुद्धा इत्यप्रतिबुद्धा। नञ्तत्पुरुष । अप्रतिबुद्धा अजागरिता धी बुद्धिर्येषा ते।

" **अबहुलबाहुबला**–न बहुलम् इत्यबहुलम्। अबहुल स्वल्प बाह्वोर्बल येषा ते।

" **अनुहरमाणा**–अनुकुर्वन्त । अनुपूर्वो हृञ्धातुरनुकरणार्थे प्रसिद्ध, 'अनुहारोऽनुकार स्यात्' इत्यमर । तस्मात् लट शानच्।

" **प्रत्यासीदत्यन्यतरस्मिन्कवौ**–अन्यतरस्मिन् द्वयोरेकतरस्मिन् कवौ कवयितरि प्रत्यासीदति समीपमागच्छति सतीति शेष । प्रति+आङ्पूर्वात् षद्लृ विशरणगत्यवसादनेषु इत्यस्मात् लट शत्रादेश ।

८९ **उपारौत्सीत्**–अवरुद्धवती आवृतवती। उपपूर्वस्य रुधिर् आवरणे इत्यस्य लुङ्प्रथमपुरुषैकवचनम्।

" **धाष्टर्चायमानेऽपि तद्व्यवहारे**–तस्या अव्वैमहोदयाया व्यवहार वर्तन तस्मिन् धाष्टर्चायमाने धाष्टर्चमिवाचरतीति धाष्टर्चायमान तस्मिन् सत्यपि, धृष्टतामये सत्यपि इत्यर्थ । 'कर्तु क्यङ सलोपश्च' इति सूत्रेण धाष्टर्चशब्दात् आचारेऽर्थे क्यङ।

" **कविम्मन्य**–कविमात्मान मन्यते इति कविम्मन्य । 'आत्ममाने खश्च' इति मन्यते पाक्षिक खश्प्रत्यय । खश शित्त्वात् सार्वधातुकत्वम्। तत श्यन्प्रत्यय । 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागम ।

" **कविमानिनम्**–कविमात्मान मन्यते इति कविमानी तम्।

'आत्ममाने खश्च' इति मन्यते पाक्षिक णिनि । णित्त्वात् मन्यतेरुपधाया वृद्धि ।

८९ **सम्मानायोग्यम्**—न योग्योऽयोग्य । सम्मानस्य आदरस्य अयोग्य तम् ।

" **क सत्कर्तव्य ववृते**—क मनुष्य सत्कर्तव्य सत्कर्तु योग्य, आदरणीय इत्यर्थ, क मनुष्यश्च न सत्कर्तव्य न समाननीय, काकाक्षिगोलकन्यायेन 'सत्कर्तव्य' इति पदस्योभयत्रान्वय, इति अस्य विषयस्य विवेचने विचारणे च विचक्षणा चतुरा ववृत बभूव ।

" **विकस्वरसारसाम्**—विकस्वराणि उत्फुल्लानि सारसानि कमलानि यस्या ताम् । 'सहस्रपत्र कमल सारस सरसीरुहम्' इत्यमर ।

" **पूतिगन्धीन्**—पूति दूषित गन्ध येषा तान् दुर्गन्धयुक्तान् इत्यर्थ । 'गन्धस्येदुत्पूतिसुसुरभिभ्य' इति गन्धशब्दस्य इकारादेश समासान्त । 'पूतिगन्धिस्तु दुर्गन्ध' इत्यमर ।

९० **वशीकार्याणि**—अवश वश करोति (वशे करोति वा) इति वशीकरोति । अभूततद्भावे च्वि । वशीकर्तु योग्यानि इति वशीकार्याणि पराभवनीयानि इत्यर्थ । 'ऋहलोर्ण्यत्' इति ण्यत् ।

" **प्राणनाशभयम्**—प्राणाना यो नाश क्षय तस्य भयम् । मृत्युभयमित्यर्थ ।

" **परिप्लाविनी**—परिप्लावयितु जनपद जलेन परिवाहयितु शीलमासाम् इति परिप्लाविन्य, परिवाहिण्य इत्यर्थ । द्वितीयाबहुवचने परिप्लाविनी । परिपूर्वात् प्लुङ् गतौ इत्यस्मात् णिजन्तात् ताच्छील्ये णिनि ।

" **समभ्यर्दनीय**—हिंसनीय, विनाशनीय इत्यर्थ । सम्+अभिपूर्वात् अर्द हिंसायामित्यस्मात् कर्मणि 'अनीयर्'प्रत्यय ।

९० **प्रशिक्षणकर्मणा**–प्रशिक्षण विनयनम्, अभ्यास इति यावत्, तस्य कर्म कार्य तेन ।

" **अन्यायमत्सरदौरात्म्यानि**–अन्याय यथोचितात् भ्रश । मत्सर ईर्ष्या । दौरात्म्य दुरात्मनो भाव, दुष्टत्वमित्यर्थ । भावे ष्यञ् । अन्यायश्च मत्सरश्च दौरात्म्य चेति तानि । चार्थे द्वन्द्व ।

" **दौर्मनस्यावहानि**–दुरित्यव्यय दु खार्थे । दु खित मनो यस्य स दुर्मना, तस्य भावो दौर्मनस्यम् । भावे ष्यञ् । दौर्मनस्य चित्तस्य वेक्लव्य, व्याकुलतामिति यावत्, आवहन्ति जनयन्ति इति तानि । पचादित्वादच् ।

९१ **अन्नवनस्पतय**–अन्नस्य अन्नोत्पादिका इत्यर्थं वनस्पतय ओषध्य, यवगोधूमादय इति भाव ।

" **परिभूषितपात्राणि**–परिभूषितानि परितोऽलङ्कृतानि पात्राणि भृङ्गारादीनि भाजनानि । 'विशेषण विशेष्येण बहुलम्' इति कर्मधारयसमास ।

" **कार्मिकाशुकानि**–कार्मिकाणि चित्रितानि च तानि अशुकानि वस्त्राणि चेति कार्मिकाशुकानि । विशेष्यविशेषणयो कर्मधारय ।

" **सावेक्षम्**–अवेक्षा प्रतिजागर, 'अवेक्षा प्रतिजागर' इत्यमर, तया सह यथा स्यात्तथा, सावधानतयेत्यर्थ । 'क्रियाविशेषणाना च क्लीबतेष्यते' इति क्लीबत्वम् ।

" **अलमतिपल्लवितेन**–पल्लव किसलय करोति इति पल्लवयति, प्रपञ्चयति विस्तारयति वेत्यर्थ । तात्पर्यानुपपत्ते 'पल्लव'-पदस्य 'पल्लव'समे विस्तारे लक्षणा । अति अत्यधिक पल्लवितेन प्रपञ्चितेन अलम् । अलमिति वारणार्थकम् । 'अल भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमर । अलमतिविस्तरेण, खलु बहूक्त्वा इत्यर्थ ।

९१ **अशेषमप्यतिशय्य**–अविद्यमान शेष यस्मात् तदशेषम्, सर्वम् इत्यर्थ, अपि अतिशय्य अतिरिच्य। एनस्मात् सर्वस्मादप्यधिकमित्यर्थ।

” **सद्विमर्शकानाम्**–सन्त उत्तमा विमर्शका विचारका तेषाम्। विपूर्वात् मृश आमर्शने इत्यस्मात् कर्तरि ण्वुल्।

” **न्याय्यसत्कर्मकृताम्**–न्याय्यानि न्यायादनपेतानि, युक्तानीत्यर्थ। 'युक्तमौपयिक लभ्य न्याय्य च त्रिषु' इत्यमर। सन्ति प्रशस्तानि कर्माणि इति सत्कर्माणि। 'सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्' इत्यमर। तानि कुर्वन्ति इति तेषाम्। क्विप् चेति क्विप्प्रत्यय।



# शब्दकोषः

**पृष्ठम् शब्द अर्थ कोषप्रमाणम्**

१ **वन्य**–वनोद्भूत–वन्य त्रिषु वनोद्भूते–मे०*
**आयास** (पु)–प्रयत्न –प्रयासायासव्यायामा –अभि० [नम्–अभि०
**आदेश** (पु)–आज्ञा–आज्ञा शिष्टिर्निराङ्निभ्यो देशो नियोगशास-
**आस्यम्** (न)–मुखम्–वक्त्रास्ये वदन तुण्डम्
**कविका** (स्त्री)–खलीन -नम्–कविका तु खलीनोऽस्त्री
**अभिधानम्** (न)–नाम–आख्याह्वे अभिधानञ्च
**भवनम्** (न)–गृहम्–गृह गेहोदवसितम् भवनागारमन्दिरम्
**वित्तम्** (न)–धनम्, द्रव्यम्–द्रव्य वित्त स्वापतेयम्
**वराक** (पु)–शोच्यजन –वराक सङ्गरे (शङ्करे) शोच्ये–वि०
**आढ्य** (पु)–धनी–इभ्य आढ्यो धनी स्वामी
२ **पाणि** (पु)–हस्त –हस्तौ तु पाणिनक्षत्रे
**अन्तरा** (अ)–मध्ये–अन्तराऽपि विनार्थे स्यान्मध्यार्थनिकटार्थयो -वि०
**रजतम्** (न)–रूप्यम्–दुर्वर्ण रजत रूप्यम् [त्रि०
**मुद्रा** (स्त्री)–सिक्का इति भाषायाम्, नाणकम्–मुद्रा प्रत्ययकारिणी–

---

***सकेतपरिचय** —मे०–मेदिनीकोष, अभि०–अभिधानचिन्तामणि, वि०–विश्वप्रकाश, त्रि०–त्रिकाण्डशेष, शा०–शाश्वतकोष, ना०–नानार्थसङ्ग्रह, अने०–अनेकार्थसग्रहकोष ।

अकृतकोषनामनिर्देशानि प्रमाणानि अमरकोषस्यैवेति बोध्यम् ।

पु–पुल्लिङ्ग शब्द, स्त्री–स्त्रीलिङ्ग शब्द, न–नपुसकलिङ्ग शब्द, अ–अव्ययम् । विशेषणाना निष्ठा-शतृशानजादिप्रत्ययान्ताना च पदाना विशेष्यनिघ्नत्वाल्लिङ्गनिर्देशो न विहित ।

समुदार–सरल, दक्षिण, महत्–दक्षिणे सरलोदारा–अभि०
कोप (पु)–क्रोध –कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ [शीलम्
वृत्ति (स्त्री)–स्वभाव, प्रकृति, भाव, प्रवृत्ति, प्रवणता, वृत्तम्,
कुत्सित–निकृष्ट–कुपूयकुत्सितावद्य०
क्रूर–निर्दय, नृशंस–नृशंसो घातुक क्रूर
वश्य–वशीकार्य, वशङ्गत, प्रणेय–वश्य प्रणेयो (निभृत०)
मेधाविन्–बुद्धिसम्पन्न, मेधाशालिन्–धीर्धारणावती मेधा
स्वान्तम् (न)–मानसम्–स्वान्त हृन्मानस मन
किशोर (पु)–बालाश्व –बाल किशोरो (वाम्यश्वा)
३ प्रासाद (पु)–राजभवनम्–प्रासादो नृपवेश्मनि–शा०
पर्णकुटीर -रम् (पु-न)–पर्णशाला, पर्णकुटी, उटज -जम्, कुटीर -रम्
आवास (पु)–गृहम्–ओको निवास आवास –अभि०
मन्यु (पु)–क्रोध –मन्युर्दैन्ये क्रतौ क्रुधि
सदनम् (न)–गृहम्, मन्दिरम्–सदन मन्दिरे तोये–मे०
क्षम–समर्थ, शक्त–सह क्षम शक्त प्रभूष्णु –अभि०
उत्तान–सरल, अगभीर–उत्तानमगभीरे स्यात्–मे०
४ दुःशीलता (स्त्री)–दुष्टता, दुःस्वभावता–शील स्वभावे सद्वृत्ते–मे०
कोश -शम् (पु-न)–जेब इति भाषायाम्, पुट -टम्, पिधानकम्–
कोशोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके–मे०
नितराम् (अ)–अत्यधिकम्, अतिमात्रम्, अतीव, अत्यन्तम्, भृशम्
अर्भक (पु)–शिशु –पोत पाकोऽर्भको डिम्भ पृथुक शावक शिशु
५ मरु (पु)–वालुकाप्रदेश, धन्वा–समानौ मरुधन्वानौ
तरु (पु)–वृक्ष –विटपी पादपस्तरु
शरासनम् (न)–धनु –धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्
शर (पु)–बाण –शरस्तेजनके बाणे–मे०
निशा (स्त्री)–रात्रि –निशा निशीथिनी रात्रि
अरण्यम् (न)–वनम्–अटव्यरण्य विपिनम्

**रासभ** (पु)—गर्दभ—रासभा गर्दभा खरा
**मृगया** (स्त्री)—आखेट—आखेटो मृगया स्त्रियाम्
**यूथ-थम्** (पु-न)—समूह—यूथ तिर्यक्समूहेऽस्त्री—मे०
**प्रत्यञ्चा** (स्त्री)—धनुष रज्जु, ज्या—मौर्वी ज्या शिञ्जिनी गुण
**रह** (न)—वेग, बलम्—शरीरस्था इमे रहस्तरसी तु रय स्यद
**लक्ष्यम्** (न)—शरव्यम्—लक्ष लक्ष्य शरव्य च
**अपराद्ध**—लक्ष्याद् भ्रष्ट-च्युत—अपराद्धपृषत्कोऽसौ लक्ष्याद् यश्च्युत-सायक
**एतर्हि** (अ)—इदानीम्—एतर्हि सम्प्रतीदानीम्
**निमित्तम्** (न)—लक्ष्यम्, शरव्यम्, लक्षम्
**शिलीमुख** (पु)—बाण—अलिबाणौ शिलीमुखौ
**कार्मुकम्** (न)—धनु—धनुश्चापौ धन्वशरासन०
**मनाक्** (अ)—किञ्चित्, अल्पम्—किञ्चिदीषन्मनागल्पे
**वाजी** (पु)—अश्व—वाजिवाहार्वगन्धर्वहयसैन्धवस नय [ऽपि च
**प्रग्रह** (पु)—अश्वनियमनरज्जु—तुलासूत्रेऽश्वादिरश्मो प्रग्राह प्रग्रहो-
६ **एडक** (पु)—मेष—मेषवृष्णय एडके
**सम्प्रति** (अ)—इदानीम्—एतर्हि सम्प्रतीदानीम्
**सभाजयितुम्** (अ)—सत्कर्तुम्, तर्पयितुम्, समानयितुम्, समादर्तुम्
**अजस्रम्** (अ)—निरन्तरम्, नित्यम्—नित्यानवरताजस्रम्
**वेश्म** (न)—गृहम्—वेश्म सद्म निकेतनम्
**भद्र**—श्रेष्ठ, शुभ, शिव—श्व श्रेयस शिव भद्रम्
**स्वभाव** (पु)—शीलम्—ससिद्धिप्रकृती त्विमे, स्वरूप च स्वभावश्च
**अभिश्लाघे**—प्रशमामि, स्तौमि, श्लाघा प्रशसा स्तुति वा करोमि
**सारमेय** (पु)—कुक्कुर—कौलेयक सारमेय कुक्कुरो मृगदशक
**अपसारित**—दूरीकृत, निवारित, अपवारित, अपाकृत
७ **आस्पदम्** (न)—स्थानम्, पात्रम्—प्रतिष्ठाकृत्यमास्पदम्
**तरुण**—युवन्—वयस्थस्तरुणो युवा

वटु (पु)–ब्रह्मचारी–ब्रह्मचारी वटु समौ–त्रि०
इषु (पु)–बाण, शर–पत्री रोप इषुर्द्वयो
स्थविर–वृद्ध–प्रवया स्थविरो वृद्ध
श्रमण (पु)–बौद्धभिक्षु–श्रमणो यतिभेदे ना–मे०
८ अभिप्राय (पु)–आशय–विधुर तु प्रविश्लेषेऽभिप्रायश्छन्द आशय
गी (स्त्री)–वाणी–गीर्वाग्वाणी सरस्वती
पोत (पु)–जलयानम्, यानपात्रम्–यानपात्रे शिशौ पोत
वल्गा (स्त्री)–प्रग्रह, रश्मि–वल्गा दन्तालिका–त्रि०
दुर्ललित–दुर्वश, स्वैरिन्, दुराग्रहिन्, दुर्दम
तुरङ्गम (पु)–अश्व–तुरङ्गाश्वतुरङ्गमा
साधुवाही (पु)–विनीत अश्व–विनीता साधुवाहिन
९ अपाम्पति (पु)–समुद्र–याद पतिरपाम्पति
तरङ्ग (पु)–लहरि-री, ऊर्मि–भङ्गस्तरङ्ग ऊर्मिर्वा
आस्तरणम् (न)–शय्योपकरणम्, तल्प-पम्, शय्या, स्रस्तर
वह्नि (पु)–अग्नि–अग्निर्वैश्वानरो वह्नि
अनल (पु)–अग्नि, पावक–कृशानु पावकोऽनल
दारक (पु)–बालक–दारको बालकेऽपि स्यात्–मे० [द्रुते
झटिति (अ)–शीघ्रम्–स्राग् झटित्यञ्जसाऽह्नाय द्राङ मङक्षु सपदि
१० कक्षा (स्त्री)–श्रेणी, वर्ग, विभाग, छात्रपङक्ति, सहाध्यायिगण
हुताशन (पु)–अग्नि, हुतभुक्–हिरण्यरेता हुतभुक्
उदाहरणम् (न)–दृष्टान्त–दृष्टो दृष्टान्तशब्दोऽयमुदाहरणशास्त्र-
यो–शा०

प्रस्तुत–उपस्थित, सन्निहित, सज्ज, सज्जीभूत
प्रसह्य (अ)–बलात्, हठात्–प्रसह्य तु हठार्थकम्
उपरत–मृत, प्रेत, परेत, परासु, गतासु, गतप्राण
सन्निहित–समीपस्थ, आसन्न, उपकण्ठ, सविध
वल्लभ (पु)–प्रिय, दयित–दयित वल्लभ प्रियम्

**छुरिका**(स्त्री)—शस्त्री, असिपुत्री—स्याच्छस्त्री चाऽसिपुत्री च
**सक्ष्वेलम्**(अ)—ससिंहनादम्—क्ष्वेडा(ला) तु सिंहनाद स्यात्
११ **प्रधनम्**(न)—युद्धम्—प्रधन दारुणे रणे—मे०
**आतुर** (पु)—आर्त्त—ग्लास्नुर्विकृत आतुर—अभि०
**श्रुति** (स्त्री)—कर्ण—कर्णशब्दग्रहो श्रोत्र श्रुति स्त्री श्रवण श्रव
**रन्ध्रम्**(न)—छिद्रम्, कुहरम्—रन्ध्रन्तु दूषणे छिद्रे—मे०
**योषा**(स्त्री)—स्त्री—स्त्री योषिदबला योषा
**तोयम्**(न)—जलम्—अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम्
**विप्लव** (पु)—उपद्रव—डमर डिम्बविप्लवो-अभि०
**शकल-लम्**(पु-न)—खण्ड-डम्—भित्त शकलखण्डे वा [स्त्रियाम्
**राशि** (पु)—कूट-टम्—(स्यान्निकाय) पुञ्जराशी तूत्कर कूटम-
**क्षुत्-द्**(स्त्री)—बुभुक्षा—अशनाया बुभुक्षा क्षुत्
**तृषा**(स्त्री)—पिपासा—उदन्या तु पिपासा तृट् [पार्थिवक्ष्माभृत्०
१२ **दैत्यराट्-ड्**(पु)—असुरराजा—असुरा दैत्यदैतेय०, राजा राट्
**दशास्य**—दशानन, दशमुख—वक्त्र,-वदन, दशकण्ठ,-कन्धर,-ग्रीव,
दशशिरस्,-शीर्षन्,-शीर्ष
**आख्या**(स्त्री)—नाम—आख्याह्वे अभिधानञ्च नामधेय च नाम च
**रोचिष्णु**—अतिशयेन शोभमान—विभ्राड् भ्राजिष्णुरोचिष्णू
**हर्म्यम्**(न)—धनिना गृहम्, महाभवनम्—हर्म्यादि धनिना वास
**नक्तन्दिवम्**(अ)—रात्रो च दिने च, रात्रिन्दिवम्, रात्रिन्दिवा,
अहर्निशम्, दिवानिशम्, नक्तन्दिनम् [रपि—ना०
**समञ्जस**—युक्त, समीचीन—समञ्जस समाख्यातमभ्यस्तोचितयो-
**प्रभृति**(अ)—आदौ—प्रभृति(अव्ययम्) तदादौ इति शब्दार्थचिन्ता-
मणि
**भ्राता**(पु)—सहोदर, सोदर, सोदर्य, अनुजोऽग्रजो वा
**अवनि-नी**(स्त्री)—पृथ्वी—क्ष्माऽवनिर्मेदिनी मही
**भद्रासनम्**(न)—सिंहासनम्—नृपासन यत्तद्भद्रासन सिंहासन तु तत्

१३ **आत्मसात्** (अ)–निजाधीनम्, निजाधिकृतम्, स्वायत्तम्, स्वनिघ्नम्
**भार्या** (स्त्री)–पत्नी, जाया–भार्या जायाऽथ (पुम्भूम्नि)
**दुर्विनीत**–विनयरहित, उद्धत, प्रगल्भ, धृष्ट
**दृप्त**–गर्वित, दर्पवत्–गर्वोऽभिमानोऽहङ्कार दर्पोऽवलेपोऽवष्टम्भ
**विपश्चित्** (पु)–बुद्धिमान्, विद्वान्–विद्वान् विपश्चिद् दोषज्ञ
**परिपन्थी** (पु)–शत्रु, वैरी, अराति–रिपौ वैरिसपत्नारि०
**कान्दिशीक**–भयद्रुत–कान्दिशीको भयद्रुत
**निलय** (पु)–गृहम्, आलय–आलयो निलय शाला–अभि०
**वशंवद**–अधीन, वश्य, वशवर्त्तिन्, वशग, विधेय, आज्ञाकर
**तूष्णीम्** (अ)–मौनम्–मौने तु तूष्णी तूष्णीकम्
**अराति** (पु)–शत्रु, द्विषन्, परिपन्थी–अभिघातिपराराति०
**अनर्गलम्** (अ)–उच्छृङ्खलम्, असम्बद्धम्–अर्गला त्रिषु कल्लोलेऽन्त-
दण्डवारयोर्न ना–मे०
**कान्तार-रम्** (पु-न)–महारण्यम्–महारण्ये दुर्गपथे कान्तार पु-
नपुसकम्
**समर-रम्** (पु-न)–रण-णम्–अस्त्रिया समरानीकरणा कलहविग्रहौ
१४ **अकुतोभय**–निर्भय, भयरहित–भीतिर्भी साध्वस भयम्
**शिर** (न)–शीर्षम्, मस्तक-कम्–उत्तमाङ्ग शिर शीर्षम्
**अनुशासनम्** (न)–उपदेश, प्रबोधनम्, शिक्षण-णा, धर्मप्रवचनम्
**आस्थानचर** (पु)–राजसभाया सदस्य–आस्थानी क्लीबमास्थान
स्त्रीनपुसकयो सद
**आह्वय** (पु)–नाम, अभिधानम्–अथाह्वयोऽभिधा–अभि०
**तथ्यम्** (न)–सत्यम्–सत्य तथ्यमृत सम्यक्
**प्रशस्त**–उत्तम, श्रेष्ठ, उत्कृष्ट, अनुत्तम, असामान्य
**पन्था** (पथिन्) (पु)–मार्ग–अयन वर्त्ममार्गाध्वपन्थान पदवी सृति
१५ **विधा** (स्त्री)–प्रकार–विधा विधौ प्रकारे च [परिच्छदे माने–ना०
**मात्रा** (स्त्री)–कोटि, काष्ठा, तारतम्याऽवस्था, परिमाणम्–मात्रा

**विपन्न**—आपद्गत—विपत्त्या विपदापदौ [वेश्य
**प्रतिवेशी** (पु)—समीपस्थ -वर्ती-वासी, प्रतिवासी, प्रतिवेश, प्रति-
**अभ्यर्णचर**—समीपचर, समीप-निकटगामिन्—उपकण्ठान्तिकाभ्यर्ण०
**आक्रान्ता** (पु)—आक्रमणकारी, आक्रामक, उपप्लवी
**सन्नाहयामास**—सज्जीचकार, सन्नद्धा सज्जा वाऽकरोत् [तेजिते
**निशित**—तीक्ष्ण, तेजित—(रुग्ण भुग्नेऽथ) निशितक्ष्णुतशातानि
**असि** (पु)—खड्ग—तूण्या खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टय
**करवाल** (पु)—खड्ग—करवाल कृपाणवत्
**निष्कृष्य** (अ)—निष्कास्य, आकृष्य, दीर्घीकृत्य
**समुल्लास्य** (अ)—परिभ्राम्य-भ्रमय्य, समुत्तोल्य, समुद्यम्य, समुद्गूर्य
**सपत्न** (पु)—शत्रु, रिपु, अमित्र—रिपौ वैरिसपत्नारि०
**विह्वल**—व्याकुल, विक्लव—विक्लवो विह्वल स्यात्तु
**विक्षुब्ध**—उत्तेजित, आकुलित, उद्दीप्त, सरब्ध, प्रकोपित
**माणवक** (पु)—कुपुरुष—माणवको हारभेदे वाले कुपुरुषेऽपि च—मे०
**वसति** (स्त्री)—गृहम्—वसती रात्रिवेश्मनो
**उत्क्रोश** (पु)—उच्चैर्घोष, महारव, कोलाहल, विराव
**क्षोणीपति** (पु)—राजा, पृथ्वीपति—क्षोणिज्यां काश्यपी क्षिति, धव प्रिय पतिर्भर्ता
**रिष्टि** (स्त्री)—खड्ग, असि—चन्द्रहासासिरिष्टय
१६ **कथङ्कारम्**—कथम्, केन प्रकारेण—कथ हर्षे च गर्हाय। प्रकारार्थे च सम्भ्रमे—मे०
**सशय** (पु)—सङ्कटम्, भयम्, भीति, सदेह, शङ्का
**उदन्त** (पु)—वृत्तान्त, वार्ता—उदन्त साधुवार्तयो—वि०
**पान्थ** (पु)—पथिक—पान्थ पथिक इत्यपि
**जलद** (पु)—मेघ—जलदो मुस्तके मेघे—मे०
**लेश** (पु)—लव, कण—लवलेशकणाणव
**नीरधि** (पु)—सागर—उदन्वानुदधि सिन्धु सरस्वान्सागरोऽर्णव

**वहित्रम्** (न)–पोत–पोत शिशौ वहित्रे च–मे०
**अभिनिविष्ट**–सलग्न, मग्न, आसक्त, व्यस्त, व्यापृत
**सत्रास** (पु)–भयम्–त्रासो भीममणिदोषयो–वि०
**रक्षावेष्टनम्** (न)–रक्षा-मेखला–वेष्टन मुकुटे वृता–मे०
**अनुजीवी** (पु)–सेवक–सेवकार्य्यनुजीविन
**आसीन**–उपविष्ट, अधिष्ठित, स्थित, अवस्थित
**पर्यवसानम्** (न)–अन्त, समाप्ति–अन्तोऽवसान सीमा च–अभि०
१७ **धीवर** (पु)–मत्स्यजीवी,-घाती, कैवर्त्त–कैवर्त्त दाशधीवरौ
**साम्प्रतम्** (अ)–अधुना–साम्प्रत चाधुनार्ये स्यात्–मे०
**प्रभूत**–बहु–प्रभूत प्रचुर प्राज्यमदभ्र बहुल बहु
**निशान्तम्** (न)–गृहम्, सदनम्–निशान्त-पस्त्य-सदनम्
**निकषा** (अ)–अन्तिकम्–समया निकषा हिरुक्
**उपसत्तुम्** (अ)–समीप गन्तुम्, उपगन्तुम्, उपयातुम्, उपसर्तुम्
**सवसथ** (पु)–ग्राम–समो सवसथग्रामौ
**स्रोतस्विनी** (स्त्री)–नदी–स्रोतस्विनी निम्नगा–अभि०
**तदात्वम्** (न)–तत्काल–तत्कालस्तु तदात्व स्यात्
**गी** (स्त्री)–वाणी–ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती
**आपगा** (स्त्री)–नदी–स्रोतस्वती द्वीपवती स्रवन्ती निम्नगापगा
**आस्था** (स्त्री)–श्रद्धा, विश्वास–अपेक्षालम्बन चास्था–त्रि०
**सकाशम्** (अ)–समीपम्–स(म)काश सदृशऽन्तिके–वि०
**पयस्विनी** (स्त्री)–नदी–पयस्विनी नदीधेन्वो–वि०
**सलिलम्** (न)–जलम्–सलिल कमल जलम्
१८ **ग्रामीण** (पु)–ग्रामवासी–ग्रामेयके तु ग्रामीणग्राम्यौ–अभि०
**सव्यपेक्ष**–अवलम्बित, आश्रित, सापेक्ष, आयत्त, निघ्न
**शावक** (पु)–शिशु–पृथुक शावक शिशु [खड्गपिधानके
**कोश-शम्** (पु-न)–पिधानकम्–कोशोऽस्त्री कुड्मले पात्रे दिव्ये
**प्रत्यूष-षम्** (पु-न)–प्रभातम्–प्रत्यूषोहर्मुख कल्यम्

**वर्त्म** (न)—मार्ग—अयन वर्त्ममार्गाध्व० [ऽवतमस तम
**अवतमसम्** (न)—ईषदन्धकार—ध्वान्ते गाढेऽन्धतमस क्षीणे-
**प्रत्यूह** (पु)—विघ्न—विघ्नाऽन्तराय प्रत्यूह
**भृश**—अत्यन्त, अतिमात्र—अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्
**अभियोग** (पु)—उद्यम—अभियोगोद्यमौ (प्रौढि)—अभि०
**दन्तावल** (पु)—हस्ती, गज—दन्ती दन्तावलो हस्ती
**वप्र -प्रम्** (पु-न)—प्राकार—वप्र प्राकाररोधसो—शा०
**साल** (पु)—प्राकार—प्राकारो वरण साल
१९ **गोफणा** (स्त्री)—गोफन इति भाषायाम्—पाषाणवर्षणोपयोगी उप-करणविशेष
**पाषाण** (पु)—प्रस्तर—पाषाणप्रस्तरग्रावोपलाश्मान शिला दृषत्
**भुशुण्डी** (स्त्री)—क्षेपणीय आयुधविशेष, सीसमयमग्न्यस्त्रम्
**द्विप** (पु)—हस्ती, गज—द्विरदोऽनेकपो द्विप
**वारण** (पु)—हस्ती, गज—कुञ्जरो वारण करी [रम्—त्रि०
**कपाट -टम्** (पु-न)—द्वारम्, द्वा—कपाटो द्वारकण्टक कवाटश्चार-
**तर** (न)—वेग, बलम्—तर स्याद् बलवेगयो—शा०
**तिर्यङ्-क्-ग्** (पु-न)—पशु पक्षी वा—स तिर्यङ् यस्तिरोऽञ्चति
**विशद**—स्पष्ट, व्यक्त—विशद पाण्डुरे व्यक्ते—वि०
**निदर्शनम्** (न)—उदाहरणम्, दृष्टान्त—(व्यक्त प्राज्ञेऽपि) दृष्टा-न्तावुभौ शास्त्रनिदर्शने
**निरामयम्** (न)—कुशलम्, अनामयम्—निरामयोऽन्यवत् कल्ये—वि०
**अनुयोक्तुम्**—प्रष्टुम्—प्रश्नोऽनुयोग पृच्छा च
**निलय** (पु)—गृहम्—गृहा पुंसि च भूम्न्येव निकाय्यनिलयालया
**कल्यता** (स्त्री)—नीरोगता—कल्य प्रभात सज्ज च कल्यो नीरोग-दक्षयो—शा०
**दन्तवास** (न)—ओष्ठ—ओष्ठोऽधरो रदच्छद, दन्तवस्त्र च—अभि०
**यथापुरम्** (अ)—यथापूर्वम्, प्राग्वत्, पूर्ववत्

**नर्म** (न)—क्रीडा, परिहास—क्रीडा लीला च नर्म च
**तपन** (पु)—सूर्य—भानुर्हंस सहस्रांशुस्तपनस्सविता रवि
**स्वापपर**—निद्रापरायण—निद्रा शयन स्वाप
२० **स्वकलित**—स्वरचित, स्वनिर्मित-कृत-विहित-प्रणीत-ग्रथित
**मरुत्** (पु)—वायु—समीरमारुतमरुज्जगत्प्राणसमीरणा
**खम्** (न)—आकाश-शम्, गगनम्—अनन्त सुरवर्त्म खम्
**कामम्** (अ)—यथेष्टम्, पर्याप्तम्—काम प्रकाम पर्याप्तम्
**घन** (पु)—मेघ—घनो मुस्तो घनोऽम्बुद—शा०
**माला** (स्त्री)—आवलि—मालाल्यावलिपङ्क्तय—अभि० [प्रवेदने
**कच्चित्** (अ)—वक्तुरभिप्रायस्य द्योतकम् अव्ययम्—कच्चित् काम-
**शम्** (अ)—सुखम्, श्रेय—श सुखे शर्मणि प्रोक्त श्रेयसि शश्च
शस्त्रके—वि०

**सम**—सर्व—सख्याते गणितमथ सम सर्वम्
**सामय**—रोगिन् (आमयेन सहित)—रोगव्याधिगदाऽऽमया [सुहृत्
**सुहृत्-द्** (पु)—मित्रम्—वयस्य स्निग्ध सवया अथ मित्र सखा
**प्रवर्तयितुम्** (अ)—प्रदीपयितुम्, प्रज्वालयितुम्, धुक्षयितुम्
२१ **वर्षा** (स्त्री)—वृष्टि, वर्ष, प्रावृट्—प्रावृट्काले तु वर्षा स्यु—वि०
**अपराह्ण** (पु)—मध्याह्नोत्तरकाल, अह्न दिनस्य वाऽपरभाग
**शकट-टम्** (पु-न)—यानविशेष—क्लीबेऽन शकटोऽस्त्री स्यात्
**प्रत्युष** (न)—प्रभातम्—उष प्रत्युषसी अपि
**पर्जन्य** (पु)—मेघ—पर्जन्यौ रसदब्देन्द्रौ
**प्राक्** (अ)—पूर्वम्—प्राक् पूर्वस्मिन्नवान्तरे—मे०
**अध्वग** (पु)—पथिक—अध्वनीनोऽध्वगोऽध्वन्य पान्थ पथिक इत्यपि
**विषाद** (पु)—चित्तम्लानता, शोक, दुखम्, परिताप, व्यथा
**प्रसाद** (पु)—प्रसन्नता—प्रसादस्तु प्रसन्नता
**मेदुर**—सान्द्र-स्निग्ध—सान्द्रस्निग्धस्तु मेदुर
**मुदिर** (पु)—मेघ, घन—घनजीमूतमुदिरजलमुग्धूमयोनय

**मुहूर्त -र्त्तम्** (पु-न)—द्वादशक्षणात्मक काल—तास्तु त्रिंशत्क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम्
**जनपद** (पु)—देश, राष्ट्रम्—नीवृज्जनपदो देशविषयो तूपवर्तनम्
**क्रमेलक** (पु)—उष्ट्र—उष्ट्रे क्रमेलकमयमहाङ्गा (करभ शिशु)
**सूपकार** (पु)—पाचक, सूद—सूपकारास्तु वल्लवा
२२ **उखा** (स्त्री)—स्थाली—पिठर स्थाल्युखा कुण्डम् [यसि—अभि०
**अट्टहास** (पु)—उच्चैर्हास्यम्—किञ्चिच्छ्रुते विहसितमट्टहासो महीयसि—
**शिविरम्** (न)—सैन्यनिवेशस्थानम्, निवेश—निवेश शिविर (षण्डे)
**महानस -सम्** (पु-न)—रन्धनशाला, पाकस्थानम—पाकस्थानमहानसे
**महाङ्ग** (पु)—उष्ट्र—उष्ट्रे क्रमेलकमयमहाङ्गा (करभ शिशु)
**पण्यगृहम्** (न)—आपण, विक्रेयवस्तुगृहम्—विक्रेय पणितव्य च पण्य क्रय्यादयस्त्रिषु
**पामर** (पु)—नीच—विवर्ण पामरो नीच प्राकृतश्च पृथग्जन
**भूरि**—बहु—पुरुहू पुरु भूयिष्ठ स्फार भूयश्च भूरि च
२३ **आपण** (पु)—क्रय्यवस्तुशाला—आपणस्तु निषद्यायाम्
**परुष**—कर्कश, निष्ठुर—निष्ठुर परुष (ग्राम्यमश्लील सूनृत प्रिये)
**आकृति** (स्त्री)—आकार—आकारविङ्गिताकृती
**क्रयिक** (पु)—वस्तुक्रेता, क्रायक -यिक—क्रायिकक्रयिकौ समौ
**सारघम्** (न)—सरघा (मधुमक्षिका) जनित मधु—मधु क्षौद्र माक्षिकादि
**समया** (अ)—समीपम्, निकषा—समया निकषा हिरुक्
**अस्तमनसमय** (पु)—सायसमय, सध्याकाल, दिनावसानम्, प्रदोष
**भर्ता** (पु)—पति—धव प्रिय पतिर्भर्ता जारस्तूपपति समौ
**व्यवसायिन्**—व्यापारिन्, व्यवसाय-व्यापारकारिन्
**वनिता** (स्त्री)—स्त्री—वनिता जातरागस्त्री—मे०
**प्रसन्न**—निर्मल, अच्छ—(त्रिष्वागाधात्) प्रसन्नोऽच्छ
**प्रस्रवणम्** (न)—निर्झर—उत्स प्रस्रवण वारिप्रवाहो निर्झरो झर

**महनीय**—पूजनीय, श्लाघ्य, अर्चनीय, उत्कृष्ट, तेजोमय
**महिमा**(पु)—महत्ता, गरिमा, माहात्म्यम् गुरुत्वम्
**विश्वम्**(न)—जगत्—विश्व कृत्स्ने च भुवने इति कोष
**विश्रुत**—प्रसिद्ध—प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुता
**शिर** (न)—शीर्षम्, मस्तक -कम्—उत्तमाङ्ग शिर शीर्षम्
**पिशिताश** (पु)—राक्षस, क्रव्याद—पिशित तस्र मासम्
**पति** (पु)—स्वामी, ईश्वर—(इभ्य आढ्यो धनी) स्वामी त्वीश्वर
पतिरीशिता
**रण -णम्**(पु-न)—युद्धम्—अस्त्रिया समरानीकरणा कलहविग्रहौ
**शाखामृग** (पु)—वानर—कपिप्लवङ्गप्लवगशाखामृगवलीमुखा
**ऋक्ष** (पु)—भल्लूक—ऋक्षाच्छभल्लभल्लूका [कूटमस्त्रियाम्
२४ **राशि** (पु)—कूट -टम्, पुञ्ज—(स्यान्निकाय ) पुञ्जराशी तूत्कर
**असव** (पु)—प्राणा—पुसि भूम्न्यसव प्राणा
**नभ** (न)—आकाश -शम्, गगनम्—नभोऽन्तरिक्ष गगनम्
**भयावह**—भयानक—दारुण च भयावहम्—अभि०
**आहव** (पु)—युद्धम्, सग्राम—सङ्ग्रामाभ्यागमाहवा
**वाहिनी**(स्त्री)—सेना—ध्वजिनी वाहिनी सेना
**विश्वास** (पु)—विस्रम्भ, आस्था—समो विस्रम्भविश्वासौ
**आस्पदम्**(न)—स्थानम्, पात्रम्—प्रतिष्ठाकृत्यमास्पदम्
**दृक्-ग्**(स्त्री)—दृष्टि, नेत्रम्—दृक् स्त्रिया दर्शने नेत्रे—मे०
**भद्रासनम्**(न)—सिहासनम्—नृपासन यत्तद् भद्रासन सिहासन तु तत्
**प्रीतिदानम्**(न)—उपहार—उपायनमुपग्राह्यमुपहारस्तथोपदा
**पृतना**(स्त्री)—सेना—पृतनानीकिनी चमू [मे०
**पुरस्तात्**(अ)—अग्रत—पुरस्तात्प्रथमे प्राच्यामग्रतोऽर्थपुरार्थयो—
[दीप्तय
**प्रभा**(स्त्री)—दीप्ति—स्यु प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युति-
**आभरणम्**(न)—भूषणम्—अलकारस्त्वाभरण परिष्कारो विभूषणम्

अहमहमिका (स्त्री)—अह पूर्वमह पूर्वमिति भावना—अहमहमिका तु सा स्यात्परस्पर यो भवत्यहङ्कार

**भार्या** (स्त्री)—पत्नी—भार्या जायाथ (पुम्भूम्नि)—मे०

**महासत्त्व**—महाबल,-प्राण-वीर्य, सत्त्वगुणप्रधान—सत्त्व गुणे पिशाचादौ बले द्रव्यस्वभावयो—मे०

**हृद्य**—हृदयस्य प्रिय-हितकर—अभीष्टेऽभीप्सित हृद्यम्

२५ **रुक्-ग्** (स्त्री)—रोग—स्त्री रुग्रुजा चोपतापरोगव्याधिगदामया

**चिराय** (अ)—विलम्बेन—चिरायचिररात्रायचिरस्याद्याश्चिरार्थका

**अध्वग** (पु)—पथिक—अध्वनीनोऽध्वगोऽध्वन्य

**प्रभाव** (पु)—शक्तिविशेष, तेज—प्रभाव शक्तितेजसो—वि०

२६ **शौण्ड**—प्रवीण, मत्त—शौण्डो मत्तेऽपि विख्यात—वि०

**वदान्य** (पु)—दानी—स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे

**भूमा** (पु)—बाहुल्यम्, बहुलता, प्राचुर्यम्, भूयस्त्वम्, वैपुल्यम्

**लोचनम्** (न)—नेत्रम्—लोचन नयन नेत्रमीक्षण चक्षुरक्षिणी

**प्रीतिभोज** (पु)—सभोजनम्, सहभोज, विशिष्टान्नसभार

**आवसथ** (पु)—गृहम्—धिष्ण्यमावसथ स्थानम्—अभि०

**अभ्यवहर्तुम्** (अ)—खादितुम्, भोक्तुम्, अत्तुम्, अशितुम्, प्रत्यवसातुम्

**समम्** (अ)—सह—(कदाचिज्जातु) सार्धं तु साक सत्रा सम सह

**अध्वा** (पु)—मार्ग—अयन वर्त्ममार्गाध्व०

**काष्ठच्छित्-द्** (पु)—काष्ठिक, काष्ठवृत्ति, दारुभारिक, दारुवृत्ति

**दारुवृत्ति**—काष्ठजीविन्,-आजीव,-उपजीविन्

**स्तम्ब** (पु)—तृणगुच्छ, गुल्म—स्तम्बो गुच्छस्तृणादिन

**नि स्व**—निर्धन—दरिद्रो दुर्विधो दु स्थो दुर्गतो नि स्वकीकटो—अभि०

**उदतरत्**—प्रत्यवदत्, प्रत्यवोचत्, प्रत्युदैरयत्, प्रत्यालपत्

**दारुभारिक** (पु)—काष्ठ-दारुवृत्ति, काष्ठिक, काष्ठच्छिद्

**काष्ठिक** (पु)— " " "

उत्सर्ग (पु)—त्याग, दानम्—उत्सर्ग त्यागदानयो—मे०
२७ अध्यवसाय (पु)—सोत्साह उद्योग—उत्साहोऽध्यवसाय स्यात्
निदिध्यासनम् (न)—पुन पुनर्ध्यानम्, गभीर प्रणिधानम्—प्रणिधान प्रयत्ने स्यात् समाधौ च प्रवेशने—मे० [श्च ता
दिक्-ग् (स्त्री)—दिशा—दिशस्तु ककुभ काष्ठा आशाश्च हरित-
अधिप (पु)—प्रभु—अधिभूर्नायको नेता प्रभु परिवृढोऽधिप
प्रवीण—निपुण—प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिता
अयस्कार (पु)—लोहकार—लोहोऽस्त्री शस्त्रक तीक्ष्ण पिण्ड कालायसायसी
वृत्ति (स्त्री)—जीविका—वृत्तिर्वर्तनजीवने
द्रुघण (पु)—मुद्गर—द्रुघणो मुद्गरघनौ [च—शा०
२८ स्थूणा (स्त्री)—सू(श)र्म-र्मी, लोहस्तम्भ—स्थूणा स्तम्भेऽय सूर्म्या
व्योकार (पु)—लोहकार—व्योकारो लोहकारक
शस्यम् (न)—क्षेत्रगतमन्नम्—शस्य क्षेत्रगत प्रोक्तम्—त्रि० [अभि०
मञ्च (पु)—पर्यङ्क—मञ्चमञ्चकपर्यङ्कपल्यङ्का खट्वया समा—
जगतीपति (पु)—राजा, पृथ्वीपति—भुवन जगती जगत्—अभि०
उद्वाह (पु)—विवाह—तथा परिणयोद्वाहोपयामा पाणिपीडनम्
विपिनम् (न)—वनम्—अटव्यरण्य विपिन गहन कानन वनम्
परिसर (पु)—(नद्यादे) उपान्तभू—पर्यन्तभू परिसर
पर्णशाला (स्त्री)—पर्णकुटी, उटज—पर्णशालोटजोऽस्त्रियाम्
आखेट (पु)—मृगया—आखेटो मृगया स्त्रियाम्
नाविक (पु)—नौवाह, कर्णधार—कर्णधारस्तु नाविक—अभि०
सकाशम् (अ)—समीपम्, अन्तिकम्—सकाश सदृशेऽन्तिके—वि०
२९ अत्याहितम् (न)—महानिष्टम्, महाभीति—अत्याहित महाभीति
कोक (पु)—वृक—कोकस्त्वीहामृगो वृक
नाराच (पु)—लोहमय बाण—नाराचो लोहबाणे स्यात्—वि०
आच्छोदनम् (न)—आखेट—आच्छोदन मृगव्य स्यात्

**दारिका** (स्त्री)–पुत्री, बाला–दारको भेदकेऽपत्ये–वि०
**अजगर** (पु)–सर्पविशेष–(तिलित्स स्यात्)अजगरे शयुर्वाहस इत्युभौ
**कुन्त** (पु)–'भाला' इति भाषायाम्, तोमर–प्रासस्तु कुन्त (कोणस्तु)
**व्यात्त**–विवृत, उद्घाटित, व्यस्त
**शयु** (पु)–अजगर–(तिलित्स स्यात्)अजगरे शयुर्वाहस इत्युभौ
**निस्त्रिंश** (पु)–खड्ग–(तूण्या) खड्गे तु निस्त्रिंश०
**द्यौ** (स्त्री)–सुरलोक, स्वर्ग–सुरलोको द्योदिवो द्वे स्त्रिया क्लीबे त्रिविष्टपम्
**पिता** (पु)–जनक, तात–तातस्तु जनक पिता
३० **प्रकाश** (पु)–ज्योति–प्रकाशस्तेज उद्योत–अभि०
**विभावसु** (पु)–अग्नि–सप्तार्चिर्दमुना शुक्रश्चित्रभानुर्विभावसु
**द्राक्** (अ)–शीघ्रम्–स्राग्झटित्यञ्जसाह्नाय
**विट्-ड्** (पु-स्त्री)–मनुजा, प्रजा–विट् पुसि मनुजे वैश्ये–मे०
**दो** (पु-न)–भुज-जा–भुजबाहू प्रवेष्टो दो
**प्रतिवासी** (पु)–समीपवासी जन, प्रतिवेशी, प्रातिवेशिक, प्रति-वेश-श्य, समीपस्थ-वर्ती
**कर्षक** (पु)–कृषिक–क्षेत्राजीव कर्षकश्च कृषिकश्च कृषीवल
**कर्मी** (पु)–कर्मकर-कारी, कार्म, कृतश्रम, श्रमिक
३१ **समूर्जस्वल**–बलवत्तर–ऊर्जस्वल स्यादूर्जस्वी [पुमान्–मे०
**स्वर** (पु)–ध्वनिविशेष–स्वरो नासासमीरणे षड्जादौ च ध्वनौ
**विभव** (पु)–ऐश्वर्यम्–हिरण्य द्रविण द्युम्नमर्थरैविभवा अपि
**विदग्ध**–निपुण–प्रवीणे निपुणाभिज्ञ०
**हर्म्यम्** (न)–महाभवनम्, धनिना गृहम्–हर्म्यादि धनिना वास
**भू** (स्त्री)–भूमि–भूर्भूमिरचलानन्ता रसा विश्वम्भरा स्थिरा
**सादी** (पु)–अश्वारोही–अश्वारोहास्तु सादिन

**हस्ती** (पु)—गज —दन्ती दन्तावलो हस्ती
**भूधर** (पु)—पर्वत, भूमिधर—भूभृद् भूमिधरे नृपे
**पत्तनम्** (न)—नगरम्—पू स्त्री पुरीनगर्यौ वा पत्तन पुटभेदनम्
**सवर** (पु)—बाध इति भाषायाम्, जलावरणम्, धरण
**पय** (न)—जलम्, अम्बु—पय क्षीर पयोऽम्बु च [मम्बरम्
**व्योम** (न)—आकाश -शम्—द्योदिवौ द्वे स्त्रियामभ्र व्योम पुष्कर-
**निरतिशय**—अत्यधिक, अत्यन्त, अतिमात्र, निस्सीम, अपरिमित
३२ **निष्कुट** (पु)—गृहसमीपकृत्रिमवनम्—गृहारामास्तु निष्कुटा
**अनिशम्** (अ)—सततम्—सततानारताश्रान्तसततातविरतानिशम्
**अजस्रम्** (अ)—निरन्तरम्—नित्यानवरताजस्रम्
**पुमान्** (पु)—नर—स्त्यु पुमास पञ्चजना पुरुषा पूरुषा नर
३३ **उपसन्न**—उपगत—समीपे निकटासन्न० [मृति
**पन्था** (पथिन्) (पु)—मार्ग—अयन वर्त्म मार्गाध्वपन्थान पदवी
**एतर्हि** (अ)—अस्मिन् वारे, अधुना—एतर्हि सप्रतीदानीम्
**विप्रतिहत**—व्याहत, बाधित, विहत, प्रतिबद्ध, कुण्ठित
**अध्यवसाय** (पु)—धैर्योत्साहसहितो निरन्तरोद्योग—उत्साहोऽध्य-
वसाय स्यात्
**वासर** (पु)—दिनम्— क्लीबे दिवसवासरौ
**प्रत्यूह** (पु)—विघ्न—विघ्नोऽन्तराय प्रत्यूह [रन्तिका
३४ **अधिश्रयणी** (स्त्री)—चुल्लि -ल्ली—अश्मन्तमुद्धानमधिश्रयणी चुल्लि-
**उद्ध्मानम्** (न)—चुल्लि -ल्ली— " "
**अन्दिका** (स्त्री)—चुल्लि -ल्ली—चुल्ल्या ज्येष्ठभगिन्या च नाट्यो-
क्त्या कथ्यतेऽन्तिका (ऽन्दिका वा)
**कवाट -टम्** (पु-न)—द्वारम्, कपाट -टम्—कवाटश्चाररम्—त्रि०
**शालमान**—शोभमान, भ्राजमान, प्रकाशमान, राजमान
**प्रभविष्णु**—समर्थ, क्षम—प्रभविष्णुरपि क्षमे—मे० [च्चया.
३५ **शिलोच्चय** (पु)—स्थूलशिला—अद्रिगोत्रगिरिग्रावाचलशैलशिलो-

**शीकर** (पु)—अम्बुकण —शीकर श (स) रले वातमृताम्बुकणयो पुमान्—मे०
**वारिधि** (पु)—सागर —उदन्वानुद- (वारि) धि सिन्धु
**कथङ्कारम्** (अ)—कथम्—कथ हप प्रकाराथ—मे०
**प्रवाल -लम्** (पु-न)—मुक्ता, विद्रुम —मुक्ताऽथ विद्रुम पुमि प्रवाल पुनपुसकम्
**पर्वत** (पु)—गिरि —महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वता
**व्यवसितवान्**—निश्चितवान्, निर्णीतवान्, अवधारितवान्, निर्धारितवान् [मोचने—अने०
**प्रसवित्री** (स्त्री)—जननी, प्रसववती—प्रसव पुष्पफलयोरुत्पत्ये गर्भ-
**अनेहा** (पु)—समय —काल दिष्टोऽप्यनेहापि समयोऽप्यथ पक्षति
**सरित्** (स्त्री)—नदी—(आवापो)ऽथ नदी सरित्
**शैवलिनी** (स्त्री)—नदी—तरङ्गिणी शैवलिनी तटिनी ह्लादिनी धुनी
**अङ्घ्रि** (पु)—चरण -णम्, पाद —पदङ्घ्रिश्चरणोऽस्त्रियाम्
**कुम्भीर** (पु)—नक्र —ग्राहोऽवहारो नक्रस्तु कुम्भीरो (ऽथ महीलता)
**प्रसू** (स्त्री)—माता—जनयित्री प्रसूर्माता जननी भगिनी स्वसा
३६ **एकनिष्ठ**—एकाग्र-ग्रच, एक-तान-चित्त-अयन, अनन्यवृत्ति-मानस, आसक्तचित्त
**ऋते** (अ)—विना—पृथग्विनाऽन्तरेणर्त्ते
**अवदानम्** (न)—शुद्ध कर्म—अवदान कर्म शुद्धम्—अभि०
**अवतारणम्** (न)—अनुवाद, भाषान्तरेण शब्दान्तरेण वा परिवर्तनम्, रूपान्तरम्
**स्वम्** (न)—धनम्—स्व स्यात् पुस्यात्मनि ज्ञातौ त्रिष्वात्मीये धनेऽस्त्रियाम्—मे०
३७ **असव** (पु)—प्राणा —पुसि भूम्न्यसव प्राणाश्चैव जीवोऽसुधारणम्
**प्राक्तन**—पुराण—पुराणे प्रतनप्रत्नपुरातनचिरन्तना

३८ **कठिन**—कठोर—कर्कश कठिन क्रूर कठोर निष्ठुर दृढम् [ञ्जकौ
**कट** (पु)—शरनिर्मितमासनम्, किलिञ्जक—(पिटौ) कट-किलि-
**संवेश** (पु)—निद्रा—स्यान्निद्रा शयनं स्वाप स्वप्न संवेश इत्यपि
**किलिञ्ज** (पु)—कट—कट किलिञ्जाख्या—त्रि०
**सन्देश** (पु)—वार्ता, वाचिकम्—सन्देशवाग्वाचिकं स्यात्
**शय्या** (स्त्री)—शयनीयम्, तल्प-ल्पम्—शय्यायां शयनीयवत्
**मसृण**—चिक्कण, स्निग्ध, कोमल—चिक्कणं मसृणं स्निग्धम्
३९ **वितान-नम्** (पु-न)—वस्त्ररचितगृहम्—अस्त्री वितानमुल्लोच
**धन्वा-न्व** (पु न)—मरुप्रदेश—समानौ मरुधन्वानौ
**उपाह्वा** (स्त्री)—(उप+आह्वा) उपनाम—आख्याह्वे अभिधानं च
**चैलम्** (न)—वस्त्रम्—वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम्
**बभ्रु**—पिङ्गल—बभ्रुर्ना पिङ्गले त्रिषु
**महाङ्ग** (पु)—उष्ट्र—उष्ट्रे क्रमेलकमयमहाङ्गा (करभ शिशु)
**कोष्ठ** (पु)—कक्ष, शाला, कुटी, गृहम्, प्रकोष्ठ, वेश्म
**वास** (पु)—निवास—वासो गेहेऽप्यवस्थाने—वि०
**उपकारिका** (स्त्री)—वस्त्रवेश्म, दूष्य-श्यम्, पट-मण्डप,-गृहम्
**मरु** (पु)—वालुकाप्रदेश—समानौ मरुधन्वानौ [गणौ
**किशोर** (पु)—बालाश्व—बाल किशोरो वाम्यश्वा वडवा वाडव
**वेश(स)र** (पु)—अश्वजातिविशेष, अश्वतर, वेगसर—अश्वतरो वेशरे च—वि०
**तूर्ण**—वेगशालिन्—सत्वर चपल तूर्णमविलम्बितमाशु च
**रक्षा-श्वा** (पु)—रक्षार्थं पालित कुक्कुर—शुनको भषक श्वा स्यात्
**तूर्यम्** (न)—वाद्यविशेष, काहल-ला तूरम्, शृङ्गवाद्यम्
**निनद** (पु)—महाशब्द—शब्दे निनादनिनदध्वनिध्वानरवस्वना
**शुद्धान्त** (पु)—अन्तःपुरम्—शुद्धान्तश्चावरोधश्च
४० **कलाप** (पु)—समूह, संहति—कलापो भूषणे बर्हे तूणीरे संहतावपि
**महार्ह-र्घ**—महामूल्य—मूल्ये पूजाविधावर्घ (र्ह)

**सभार** (पु)–उपकरणसमूह, सामग्री, द्रव्यजातम्
**तल्लज** (पु)–श्रेष्ठवाचकशब्दोऽय समासान्ते प्रयुज्यते–प्रकाण्ड-
मुद्घतल्लजो प्रशस्तवाचकान्यमूनि [ऽन्यत
**ह्री** (स्त्री)–लज्जा–मन्दाक्ष ह्रीस्त्रपा व्रीडा लज्जा साऽपत्रपा-
**हृदयम्** (न)–चित्तम्–चित्त तु चेतो हृदयम्
**श्री** (स्त्री)–शोभा–शोभासपत्तिपद्मासु लक्ष्मी श्रीरिव दृश्यते
**गर्त -र्ता-र्तम्** (पु-स्त्री-न)–भूगत विवरम्, अवट–गर्तावटौ भुवि
श्वभ्रे
**अन्तरेण** (अ)–विना–पृथग्विनाऽन्तरेणर्ते
**वप्र -प्रम्** (पु-न)–मृत्तिकाकूटम–स्याच्चयो वप्रमस्त्रियाम्
**दौर्गत्यम्** (न)–दारिद्र्यम्–दुर्गतो नि स्वकीकटौ–अभि०
**मुधा** (अ)–वृया–व्यर्थके तु वृथा मुधा
**मोघ**–निरर्थक–मोघ निरर्थक (स्पष्टम्)
४१ **प्राश्यम्** (न)–भोज्यम्, खाद्यम्, अभ्यवहार्यम्, भक्ष्यम्
**वीथि -थी** (स्त्री)–मार्ग, पदवी–( वृद्धौ) वीथी पदव्यपि
**मनोहर**–सुन्दर–सुन्दर रुचिर चारु सुषम साधु शोभनम्
**विग्रह** (पु)–काय–कायो देह क्लीबपुसो स्त्रिया मूर्तिस्तनुस्तनू
**तीरम्** (न)–तटम्–कूल रोधश्च तीर च प्रतीर च तट त्रिषु
**पिष्टक** (पु)–रोटिका, पूप–पूपोऽपूप पिष्टक स्यात्
**शकल -लम्** (पु-न)–खण्ड -ण्डम्–भित्त शकलखण्डे वा पुस्यर्धोऽर्धं
समेऽशके
**व्रश्चन -नम्** (पु-न)–कर्तरी-रिका, छुरिका–व्रश्चन पत्रपरशु
**छुरी** (स्त्री)–व्रश्चनविशेष–छुरिका चाऽसिधेनुका
**चमस -सी-सम्** (पु-स्त्री-न)–कबि-बी, दर्वि-र्वी, खजाका, स्रुव -वा,
आचमनी
**अशनायित**–बुभुक्षित–बुभुक्षित स्यात्क्षुधितो जिघत्सुरशनायित
**पिपासित**–तृषित–उदन्या तु पिपासा तृट्

**प्रस्रवणम्** (न)–निर्झर–उत्स प्रस्रवण वारि० [जलम्
**सलिलम्** (न)–जलम्–आप स्त्री भूम्नि वार्वारि सलिल कमल
**असाम्प्रत**–अनुचित, अयुक्त–युक्ते द्वे साम्प्रत स्थाने
**पदम्** (न)–स्थानम्–पद व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु
४२ **अनेहा** (पु)–समय–कालो दिष्टोऽप्यनेहापि
**पलम्** (न)–क्षण (कालविशेष)–निर्व्यापारस्थितौ कालविशेषो-त्सवयो क्षण [मे०
**श्रेय** (न)–शुभम्, कल्याणम्, श्रेष्ठहितम्–श्रेयो मुक्तौ शुभे धर्मे–
**नीरुज्-ज**–नीरोग (निर्+रुज्-जा)–स्त्री रुग्रुजा चोपताप०
**तनु** (स्त्री)–देह–स्त्रियां मूर्तिस्तनुस्तनू
**अवदात**–निर्मल, धवल–अवदात सितो गौर
**विमल**–निर्मल, पवित्र, मेध्य, शुचि, शुद्ध, स्वच्छ
**धी** (स्त्री)–बुद्धि–धी प्रज्ञा शेमुषी मति
४३ **वासतेयी** (स्त्री)–रात्रि-त्री–वासतेयी तमस्विनी–अभि०
**तुरीय**–चतुर्थ, तुर्य, चतुर्णां पूरण
**याम** (पु)–प्रहर–द्वौ यामप्रहरौ समौ
**व्रत-तम्** (पु-न)–नियम–नियमो व्रतमस्त्री तत्
**सूद** (पु)–पाचक, सूपकार–सूपकारास्तु बल्लवा .. सूदा औदनिका गुणाः
**रजतम्** (न)–रूप्यम्–दुर्वर्ण रजत रूप्य खर्जूर श्वेतमित्यपि
**महारजतम्** (न)–सुवर्णम्–महारजतकाञ्चने
**त्रियामा** (स्त्री)–रात्रि–त्रियामा क्षणदा क्षपा
**पारणा-णम्** (स्त्री-न)–व्रत-पूर्त्ति-समाप्ति, व्रतान्तभोजनम्
**वच** (न)–वचनम्–व्याहार उक्तिर्लपित भाषित वचन वचः
**पिपीलिका** (स्त्री)–हारी–पिपीलिका तु हारी स्यात्–त्रि०; पिपीलिका तु हीनाङ्गी-अभि०
**आविलयाम्बभूवु**–कलुष मलिन वा चक्रु–कलुषोऽनच्छ आविल

**रुक्-ग्** (स्त्री)–रोग –रोगव्याधिगदामया

४४ **पुरुष** (पु)–नर –मनुष्या मानुषा मर्त्या पुरुषा पूरुषा नर

**आसव** (पु)–मद्यम्, मधु–मैरेयमासव सीधु

**अनुतर्षणम्** (न)–मद्यपानम्, सरक –सरकोऽप्यनुतर्षणम्

**सरक** (पु)–शीधुपानम्–सरकोऽस्त्री शीधुपानम्–मे०

**कृती** (पु)–धीमान्–धीमान् सूरी कृती कृष्टि

**समिति** (स्त्री)–सभा–सभा-समिति-समद

**सदस्य** (पु)–सभासद्–सभासद सभास्तारा सभ्या सामाजि-
काश्च ते

**दारुण**–भयानक–दारुण भीषण भीष्म घोर भीम भयानकम्

४५ **कलेवरम्** (न)–देह –(अपघनोऽथ) कलेवरम् कायो देह
क्लीबपुंसो

**किंसेवक** (पु)–कुत्सित सेवक –सेवकार्थ्यनुजीविन

**शस्त्रभृत्-द्** (पु)–शस्त्र बिभर्ति धारयति इति शस्त्रभृत्, शस्त्र-
धारी– शस्त्रमस्त्रमथास्त्रियौ

**नौ** (स्त्री)–नौका, तरि-री –स्त्रियां नौस्तरणिस्तरि

**कूपक** (पु)–नौकाकर्षकरज्ज्वाद्याधारो मध्यस्तम्भ काष्ठ वा–
कूपको गुणवृक्षे स्यात्–मे०

**अपकृष्ट**–हीन, निकृष्ट, अवर, अधम–अधमो न्यूनगर्ह्ययो –शा०

**सीता** (स्त्री)–हलरचिता रेखा–सीता लाङ्गलपद्धति

**गात्रम्** (न)–शरीरम्–गात्र वपु संहनन शरीर वर्म विग्रह

**उपचित**–प्रवृद्ध, उपचय प्राप्त–निदिग्धोपचिते (गूढ०)

**पेशी** (स्त्री)–मांसपिण्डी–पेशी पललपिण्ड्या स्यात्–वि०

**चय** (पु)–समूह –समुदाय समुदय समवायश्चयो गण

**संवत्सर** (पु)–वर्ष-र्षम्, वत्सर –संवत्सरो वत्सरोऽब्द

**मदिष्ठा** (स्त्री)–सुरा–मद्य मदिष्ठा मदिरा–अभि०

**मृष्ट**–मधुर–स्वादुप्रियौ तु मधुरौ

**वृषा** (पु)—वृषभ—उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृष
**शाद** (पु)—तृणम्, शष्पम्—शादो जम्बालशष्पयो
**स्रोतोवहा** (स्त्री)—नदी—स्रोतस्वती द्वीपवती स्रवन्ती निम्नगापगा
**उद्वेग** (पु)—संताप उद्वेजनम्, उद्भ्रम—(मद) उद्वेग उद्भ्रमे
**निद्रा** (स्त्री)—शयनम्—निद्रा शयन स्वाप
**रुष्ट**—क्रुद्ध, कुपित, जातामर्ष, कोपित्
४६ **शरव्यम** (न)—लक्ष्यम्—लक्ष्य लक्ष शरव्य च
**तरुण** (पु)—युवा—वयस्यस्तरुणो युवा
**दिनकृत्** (पु)—सूर्य (दिन करोति इति)—सूरसूर्यार्यमादित्य-द्वादशात्मदिवाकरा
**धनुर्वित्-द्** (पु)—धनुर्धर—धन्वी धनुष्मान् धानुष्को निषङ्गयस्त्री धनुर्धर
**सायक** (पु)—शर—शरे खड्गे च सायक
**आकूतम्** (न)—अभिप्राय—छन्दोऽभिप्राय आकूतम्—अभि० [तम
**तम** (न)—अन्धकार—अन्धकारोऽस्त्रिया ध्वान्त तमिस्त्र तिमिर
**तूष्णीम्** (अ)—मौनम्—मौने तु तूष्णी तूष्णीकम्
**विशिख** (पु)—बाण—पृषत्क-बाण-विशिखा
**यश** (न)—कीर्ति—यश कीर्ति समज्या च
४७ **स्यन्दन** (पु)—रथ—शताङ्ग स्यन्दनो रथ
**मृगव्यम्** (न)—आखेट—आच्छोदन मृगव्य स्यात्
**गहनम्** (न)—अरण्यम्—गहन कानन वनम्
**महिष** (पु)—'भैसा'—लुलायो महिषो वाहद्विषत्कासरसैरिभा
**द्विप** (पु)—गज—द्विरदोऽनेकपो द्विप
**द्वीपी** (पु)—व्याघ्र—शार्दूल-द्वीपिनौ व्याघ्रे
**निभृत**—मन्द-मन्द, प्रच्छन्न, गूढ, गुप्त
**पेलव**—विरल—पेलव विरल तनु
**ध्वनि** (पु)—शब्द—शब्दे निनाद-निनद-ध्वनि-ध्वान-रवस्वना

**तमस्विनी** (स्त्री)—रात्रि—विभावरीतमस्विन्यौ
**निवह** (पु)—समूह—समूहो निवहव्यूहसदोहविसरव्रजा
**कला** (स्त्री)—अश, भाग—कला तु (षोडशो) भाग
**कासार** (पु)—सर—कासार सरमी सर
**स्तोकम्** (अ)—अल्पम्—स्तोकाल्प-क्षुल्लका (सूक्ष्मम्)
**द्विरद** (पु)—हस्ती—द्विरदोऽनेकपो द्विप
**द्यौ** (दिव्) (स्त्री)—आकाश-शम्, गगनम्—(स्वरव्ययम्) द्योदिवौ
द्वे स्त्रिया क्लीबे त्रिविष्टपम्
**साध्वसम्** (न)—भयम्—भीतिर्भीस्साध्वस भयम्
**पलित**—वृद्ध—पलित जरसा शोक्त्य केशादौ विस्रसा जरा
**उदन्त** (पु)—वार्ता—उदन्त साधुवार्तयो—मे०
**अरुन्तुद**—मर्मस्पृक्—अरुन्तुद तु मर्मस्पृक्
४८ **अरु** (न)—व्रण, ईर्मम्—व्रणोऽस्त्रियामीर्ममरु
**पिता** (पु)—जनक—तातस्तु जनक पिता
**सर** (न)—तडाग—कासार सरसी सर
**आपत्-द्** (स्त्री)—विपत्-द्—विपत्त्या विपदापदौ
**प्रतिवाक्यम्** (न)—उत्तरम्—प्रतिवाक्योत्तरे समे
**आत्मसभव** (पु)—पुत्र, आत्मज—आत्मजस्तनय सूनु [विराट्
**राजन्य** (पु)—क्षत्रिय—मूर्धाभिषिक्तो राजन्यो बाहुज क्षत्रियो
**धनु** (न)—चाप—धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्
**अवलिप्त**—गर्वित, अवलेप प्राप्त—दर्पोऽवलेपोऽवष्टम्भः
**सत्त्व-त्त्वम्** (पु-न)—जन्तु—सत्त्वमस्त्री तु जन्तुषु
**स्वन** (पु)—ध्वनि—ध्वनि-ध्वान-रव-स्वना
**प्रायश्चित्तम्** (न)—पापमुक्त्यर्थ कृत कर्म—पापापनोदक कर्म प्राय-
श्चित्तमितीर्यते इति कोष
**अपत्यम्** (न)—सन्तान-नम्—अपत्य तोक तयो समे
**शुचि**—पवित्र, अवदात—शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डरा.

**ऋषि** (पु)–सत्यद्रष्टा, सत्यवक्ता–ऋषय सत्यवचस
**अवद्यम्** (न)–दोष, गर्ह्य कर्म–कुपूयकुत्सिताऽवद्य०
४९ **जगती** (स्त्री)–लोक–त्रिष्वथो जगती लोको विष्टप भुवन जगत्
**वामा** (स्त्री)–सुन्दरी–प्रतीपदर्शिनी वामा वनिता महिला तथा
**विप्रकृति** (स्त्री)–अनिष्टम्, निकृति–निकृत स्याद् विप्रकृत
**कपट -टम्** (पु-न)–शाठ्यम्, व्याज–कपटोऽस्त्री व्याजदम्भ०
**उपाय** (पु)–साधनम्–उपाय सामभेदादो–मे०
**निर्वासित**–बहिष्कृत–निर्वासन हिंसने स्यान्नगरादेर्वहिष्कृतौ–मे०
**विरह** (पु)–वियोग–वियोगो विरह समा–अभि०
**वाणिज** (पु)–वणिक्–नैगमो वाणिजो वणिक्
**आश्यान**–शुष्क, निर्जल, रूक्ष, नीरस
**प्रदेश** (पु)–स्थानम्–प्रदेशा देशमात्रे स्यात्–मे०
**तनूनपात्** (पु)–अग्नि–अग्निर्वैश्वानरो वह्निर्जातवेदास्तनूनपात्
**आप्यायित**–परिपुष्ट, आपीन, तृप्त, तुष्ट, तोषित, तर्पित
**तपात्यय** (पु)–वर्षर्तु, प्रावृट्–वर्षास्तपात्यय प्रावृट्–अभि०
५० **पण्योपजीवी** (पु)–वणिक्–पण्याजीवो ह्यापणिक [सुहृत्
**वयस्य** (पु)–मित्रम्–वयस्य स्निग्ध सवया अथ मित्र सखा
**वत्सल**–प्रिय, स्निग्ध–(श्रीमान्) स्निग्धस्तु वत्सल
**परिधानम्** (न)–वस्त्रम्–अन्तरीयापसव्यानपरिधानान्यधोंशुके
**आशय** (पु)–अभिप्राय–अभिप्रायश्छन्द आशय
**वैदेहक** (पु)–वणिक्–वैदेहको वाणिजके–वि०
**व्यवहारी** (पु)–व्यापारी–व्यवहार स्थितौ पणे–अने०
**अद्धा** (अ)–सत्यम्, तत्त्वम्, अञ्जसा–तत्त्वे त्वद्धाऽञ्जसा द्वयम्
**क्षितीन्द्र** (पु)–क्षिते (भुव) इन्द्र, राजा, भूप–राजा राट्
पार्थिवक्ष्माभृन्नृपभूपमहीक्षित
**दाक्षाय्य** (पु)–गृध्र–(आतायिचिल्लौ) दाक्षाय्यगृध्रौ (कीर-
शुकौ समौ)

**सार्थिक** (पु)–वणिक्, सार्थवाह–वैदेहक सार्थवाह
**समीक्ष्यकारिता** (स्त्री)–विवेकशीलता, विमृश्यकारिता
**व्यसनम्** (न)–विपद्, दोष–व्यसन विपदि भ्रंशे दोषे कामज-कोपजे
५१ **शतदलम्** (न)–कमलम्, शतपत्रम्–शतपत्र तु राजीवे–अने०
**वलीमुख** (पु)–वानर, कपि–शाखामृग-वलीमुखा
**श्रुति** (स्त्री)–कर्ण–कर्णशब्दग्रहो श्रोत्र श्रुति स्त्री श्रवण श्रव
**आस्यम्** (न)–मुखम्–वक्त्रास्ये वदन तुण्डमानन लपन मुखम्
**प्रेक्षावान्** (पु)–प्रेक्षा अस्यास्तीति, बुद्धिमान्–प्रेक्षोपलब्धिश्चित् सवित् प्रतिपज्ज्ञप्तिचेतना
**परिणति** (स्त्री)–परिणाम, उदर्क, उत्तरम्, उत्तरफलम्
**पथिप्रज्ञ** (पु)–मार्गवेत्ता, मार्गकोविद, मार्गज्ञ, मार्गवित्
५२ **कण्ठीरव** (पु)–सिंह–सिंह कण्ठीरवो हरि–अभि०
**वृक** (पु)–कोक–कोकस्त्वीहामृगो वृक
**खिङ्खिर** (पु)–शृगालविशेष, खिंखि–खिङ्खिरस्तु शिवाभेदे–मे०
**गर्दभ** (पु)–खर–रासभा गर्दभा खरा [मे०
**शशक** (पु)–पशुविशेष–नेपथ्ये च शशो बोले लोध्रे नृपशुभेदयो–
**ईहामृग** (पु)–वृक–कोकस्त्वीहामृगो वृक
**पारितोषिकम्** (न)–पुरस्कार, उपायनम्, प्रतिफलम्
**बहुमाय** (पु)–शृगालजातिवेशष, खिङ्खिर, कि-खिखि
**चक्रीवान्** (पु)–रासभ–चक्रीवन्तस्तु बालेया रासभा गर्दभा खरा
**सारङ्ग** (पु)–हरिण–चातके हरिणे पुंसि सारङ्ग शबले त्रिषु
**मृदुरोमा** (पु)–शश–शशस्तु मृदुलोमक–अभि०
**विघस** (पु)–भोजनम्–अमृत विघसो यज्ञशेषभोजन (शेषयो)
**विवेक** (पु)–सदसद्विचार, पृथगात्मता–विवेक पृथगात्मता
**वार्ता** (स्त्री)–वृत्तान्त–वार्ता प्रवृत्तिर्वृत्तान्त उदन्त स्यादथाह्वय

**निपुणम्** (ज)—प्रवीणतया—प्रवीणे निपुणाभिज्ञ०
५३ **चातुर्यम्** (न)—कौशलम्—कुशलश्चतुरोऽभिज्ञ०—अभि० [हरि
**पञ्चास्य** (पु)—सिंह—सिंहो मृगेन्द्र पञ्चास्यो हर्यक्ष केसरी
**पत्तनम्** (न)—पुरम्—पू स्त्री पुरीनगर्यो वा पत्तन पुटभेदनम्
**सभासदनम्** (न)—सभागृहम्—सभासमितिसमसद, निशान्तपस्त्य-
सदनम्
**मनीषी** (पु)—प्राज्ञ—धीरो मनीषी ज्ञ प्राज्ञ
**परिषत्-द्** (स्त्री)—सभा, समिति—समज्या परिषद् गोष्ठी सभा-
समितिसंसद
**पतत्री** (पु)—पक्षी, खग—पतत्रिपत्रिपतगपतत्पत्ररथाऽण्डजा
**पतत्रम्** (न)—पक्ष, छद—गरुत्र च तनूरुहम्
**पीठम्** (न)—आसनम्—(प्रदीप) पीठमासनम्
**देश** (पु)—राष्ट्रम्, विषय—नीवृज्जनपदो देशविषयौ तूपवर्तनम्
**सिंहासनम्** (न)—नृपासनम्—नृपासन यत्तद्भद्रासन सिंहासन तु तत्
**राजि** (स्त्री)—पङ्क्ति—राजि स्त्री पङ्क्तिलेखयो
५४ **तपनीयम्** (न)—सुवर्णम्—तपनीय शातकुम्भम्
**मणि** (पु)—रत्नम्—रत्न मणिद्वयोरश्मजातौ मुक्तादिकेऽपि च
**माणिक्यम्** (न)—रत्नविशेष—"वज्र विद्रुम-मौक्तिक, मरकत
वैदूर्यगोमेदकम्। माणिक्य हरि-नील-पुष्प-दृषदो रत्नानि
नाम्ना नव॥" इति निघण्टुरत्नाकर
**मुक्ताफलम्** (न)—मौक्तिकम्—मुक्ताफलन्तु कर्पूरे मौक्तिके लवली-
फले
**शिखरम्** (न)—शृङ्गम्—कूटोऽस्त्री शिखर शृङ्गम्
**केकी** (पु)—मयूर—शिखावल शिखी केकी
**अश्मगर्भ** (पु)—मणिविशेष—अश्मगर्भो हरिन्मणि
**स्तम्भ** (पु)—स्थूणा—स्तम्भौ स्थूणाजडीभावौ
**पद्मराग** (पु)—मौक्तिकम्—पद्मरागोऽथ मौक्तिकम्

**गोस्तनी** (स्त्री)—द्राक्षा—मृद्वीका गोस्तनी द्राक्षा
**स्कन्ध** (पु)—प्रकाण्ड—अस्त्री प्रकाण्ड स्कन्ध स्यात्
**कार्त्तस्वरम्** (न)—काञ्चनम्—रुक्म कार्तस्वर जाम्बूनदम्
**आसन्दी** (स्त्री)—आसन्द, आमनम्, पीठम्
**रूप्यम्** (न)—रजतम्—दुर्वर्ण रजत रूप्यम्
**वेला** (स्त्री)—काल—वेला काले व सीमायाम्—मे०
**मूर्धा** (पु)—मस्तक-कम्—मूर्धा ना मस्तकोऽस्त्रियाम्
**परित** (अ)—समन्तत—समन्ततस्तु परित सर्वतो विश्वगित्यपि
**पुच्छ-छम्** (पु-न)—लाङ्गूलम्—पुच्छोऽस्त्री लूमलाङ्गूले
**पक्षति** (स्त्री)—पक्षमूलम्—पक्षति पक्षमूले स्यात्—वि०
**सौविध्यम्** (न)—सौकर्यम्, सुसाध्यता, सुकरता
**खिखि** (पु)—गोमायुभेद—स्त्रिया शिवा भूरिमायगोमायुमृगधूर्तका
५५ **अध्यापक** (पु)—गुरु—उपाध्यायोऽध्यापकोऽय स्यान्निषेकादिकृद् गुरु
**प्राड्विवाक** (पु)—वाक्कील, अक्षदर्शक—प्राड्विवाकाक्षदर्शकौ
**ब्राह्मण** (पु)—विप्र—विप्रश्च ब्राह्मणोऽसौ (षट्०)
**दर्प** (पु)—अहङ्कार—दर्पोऽहङ्कारकस्तूर्य्यो—वि०
**विशाम्पति** (पु)—नरपति—विशो भूमिस्पृशो नर—शा०
**सूनु** (पु)—पुत्र—आत्मजस्तनय सूनु सुत पुत्र (स्त्रिया त्वमी)
**निर्दलनम्** (न)—हननम्, हत्या, वध, घात, मारण, नाश, निषूदन, व्यापादनम्
**पर्णशाला** (स्त्री)—पर्णकुटी—चतु शाल मुनीना तु पर्णशालोटजोऽस्त्रियाम्
**व्यपदेश** (पु)—नाम, सज्ञा, नामधेयम्, अभिधानम्, आख्या, आह्वय [स्वती
**वाक्-ग्** (स्त्री)—वाणी—ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सर-
५६ **सम्प्रति** (अ)—अधुना—एतर्हि सप्रतीदानीम्

**आह्वय** (पु)–नाम–आख्याह्वे अभिधान च
**सौध-धम्** (पु-न)–राजमदनम्–सोधोऽस्त्री राजमदनम्
५७ **व्यपदेश** (पु)–व्याज–व्यपदेशो मिष लक्षम्–अभि०
**मृत्-द्** (स्त्री)–मृत्तिका–मृन्मृत्तिका सा क्षारोप–अभि०
**भङ्गुर**–क्षयशील–भङ्गुरौ वक्रनश्वरौ–अने०
५८ **प्रीति** (स्त्री)–तृप्ति, आमोद, हर्ष–मुत् प्रीति प्रमदो हर्ष
**पात्रम्** (न)–भाण्डम्–पात्रामत्र च भाजनम्
**निकष** (पु)–स्वर्णादिपरीक्षाशिला–शाणस्तु निकष कष–अने०
**लवम्** (अ)–अल्पम्–लवलेशकणाणव
**द्विज** (पु)–ब्राह्मण–द्विज स्याद् ब्राह्मणक्षत्र० [बुध
**विपश्चित्** (पु)–विद्वान्–विद्वान्विपश्चिद्दोषज्ञ सन्सुधी कोविदो
**साम्प्रतम्** (अ)–अधुना–अधुना साम्प्रत तथा
**कृष्ण**–श्याम–कृष्णे नीलासितश्यामकालश्यामलमेचका
**फलक-कम्**–(पु-न)–पट्ट, लेखनाधार, मञ्च
**स्फीत**–स्थूल, प्रवृद्ध, उपचित, विपुल, पीन
**मस्तिष्कम्** (न)–देहस्य अङ्गविशेष, मस्तकमभ्तघृताकारस्नेह, (तिलक क्लोम) मस्तिष्क गोर्द (किट्ट मलोऽस्त्रियाम्)
**प्रकाण्डम्** (न)–प्रशस्तवाचक पदमिदम्–मतल्लिका मचर्चिका प्रकाण्डमुद्घतल्लजौ, प्रशस्तवाचकान्यमूनि
**वाराणसी** (स्त्री)–काशी, विश्वनाथपुरी
५९ **गङ्गा** (स्त्री)–भागीरथी–गङ्गा विष्णुपदी जह्नुतनया
**त्रिदश** (पु)–देव–अमरा निर्जरा देवास्त्रिदशा विबुधा सुरा
**आपगा** (स्त्री)–नदी, निम्नगा–स्रवन्ती निम्नगापगा
**शिला** (स्त्री)–बृहत्पाषाण–उपलाश्मान शिला दृषत्
**अद्यम्** (न)–खाद्यम्, भक्ष्यम्, भोज्यम्, अभ्यवहार्यम्
**प्रान्त** (पु)–अन्तप्रदेश, सीमा–अन्त प्रान्तेऽन्तिके (नाशे)–वि०
**पवित्र**–पूत–पवित्र प्रयत पूत

**व्रत -तम्** (पु-न)—नियम —नियमो व्रतमस्त्री तत् [वासरौ
**वासर** (पु)—दिनम्, दिवस —घस्रो दिनाहनी वा तु क्लीबे दिवस-
**सौम्य**—शान्त, सुन्दर—सौम्यो ज्ञे त्रिष्वनुग्रे मनोज्ञे सोमदैवते—मे०
**सहसा** (अ)—एकपदे, अतर्कितम्—अतर्किते तु सहसा स्यात्
**उपनत**—उपगत, प्राप्त, समासन्न, उपसृत
**बस्ता** (स्त्री)—अजा—अजा छागी शुभच्छागबस्तच्छगलका अजे
**मायावी** (पु)—शठ, कपटी—माया तु शठता शाठ्यम्—अभि०
**उच्च**—उन्नत—उच्चप्रांशून्नतोदग्र०
६० **दुष्कृतम्** (न)—दुष्कर्म—कलुष वृजिनैनोऽघमंहो दुरितदुष्कृतम्
**बक** (पु)—बगला इति भाषायाम्, कह्व – (कुङ् क्रौञ्चोऽथ) बक कह्व
**कैतवम्** (न)—कपट -टम्, शाठ्यम्—कपटोऽस्त्री व्याजदम्भो-पधयश्छद्मकैतवे
**प्रतारक** (पु)—वञ्चक —वञ्चन च प्रतारणमिति कोष
**वाहिनी** (स्त्री)—सेना—ध्वजिनी वाहिनी सेना
**अभिचार** (पु)—हिंसाकर्म—हिंसाकर्माभिचार स्यात्
**समर -रम्** (पु-न)—युद्धम्, विग्रह —अस्त्रिया समरानीकरणा कलहविग्रहौ
**प्रिय**—प्रेमपात्र—दयित वल्लभ प्रियम्
**सेनानी** (पु)—सेनापति, वाहिनीपति —सेनानीर्वाहिनीपति [मे०
**निष्करुण**—क्रूर, निष्ठुर—करुणस्तु रसे वृक्षे कृपायां करुणा मता—
**स्मितम्** (न)—मन्दहास —स्यादाच्छुरितक हास सोत्प्रास स मनाक्स्मितम्
**नाराच** (पु)—लोहमयो बाण, प्रक्ष्वेडन —प्रक्ष्वेडनास्तु नाराचा
**दम्भ** (पु)—कपट -टम्—कपटोऽस्त्री व्याजदम्भ०
६१ **मही** (स्त्री)—पृथ्वी—गोत्रा कु पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही
**प्रसूनम्** (न)—पुष्पम्—प्रसून कुसुम सुमम्

**परिमल** (पु)–सुगन्ध–विमर्दोत्थे परिमलो गन्धे जनमनोहरे
**स्वान्तम्** (न)–चित्तम्–चित्त तु चेतो हृदय स्वान्त हृन्मानस मन
**सुवासित**–सुरभित–वासित भाविते रुते–मे०
**निकेतनम्** (न)–गृहम्–वेश्म सद्म निकेतनम्
**अन्नम्** (न)–भोजनम्, भक्तम्–भिस्सा स्त्री भक्तमन्धोऽन्नम्
**वृषल** (पु)–शूद्र–शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजा
**शाकुनिक**–शकुनिलुब्ध, जालिक–जीवान्तक शाकुनिक
**वेश्म** (न)–गृहम्–वेश्म सद्म निकेतनम्
६२ **उपहार** (पु)–उपायनम्–उपायनमुपग्राह्यमुपहारस्तथोपदा
**संसृति** (स्त्री)–ससार, भुवनम्, विश्वम्, लोक–विष्टप भुवन जगत्
**प्राभृतम्** (न)–उपहार–प्राभृत तु प्रदेशनम्
**मसूर** (पु)–सूपविशेष, मङ्गल्यक–मङ्गल्यको मसूरोऽथ
**अन्तेवासी** (पु)–शिष्य–छात्रान्तेवासिनौ शिष्ये
**विपुल**–अत्यधिक, अतिमात्र–वड्रोरुविपुल (पीन०)
**वित्तम्** (न)–धनम्–द्रव्य वित्त स्वापतेय रिक्थमृक्थ धन वसु
**ऐश्वर्यम्** (न)–धनम्, वैभवम्–विभूतिर्भूतिरैश्वर्यम्
**विभव** (पु)–धनम्–अर्थरैविभवा अपि
**अंश** (पु)–भाग–अंशभागौ तु वण्टके
**स्वापतेयम्** (न)–धनम्, द्रव्यम्–द्रव्य वित्त स्वापतेयम्
**दुर्गत**–दरिद्र–दरिद्रो दुर्गतोऽपि स
**अङ्गना** (स्त्री)–स्त्री, कामिनी–विशेषास्त्वङ्गना भीरु कामिनी वामलोचना
**गोधूम** (पु)–'गेहूं' इति भाषायाम्–गोधूम सुमन समौ
**कान्दवम्** (न)–रोटिका, अपूप, पिष्टक, कोकुन्द–पूपोऽपूप पिष्टक स्यात्
**स्वं** (पु)–आत्मा, स्वात्मा–स्व स्यात् पुस्यात्मनि ज्ञातौ–मे०

**तुला** (स्त्री)–तोलनयन्त्रम्, मापन, (सुवर्णकारस्य) एषणिका
**पार्श्व -र्श्वम्** (पु-न)–पक्ष, उपान्त –पार्श्व कक्षाधरे चक्रोपान्ते पर्शुगणेऽपि च–मे०, वि०
**प्रदेशनम्** (न)–उपहार, उपायनम्–प्राभृत तु प्रदेशनम्
६३ **तुल्य**–सम, सदृश–वाच्यलिङ्गा समस्तुल्य सदृक्ष सदृश सदृक्
**सूप -पम्** (पु-न)–द्विदलम्, व्यञ्जनम्–सूपो व्यञ्जनसूदयो –मे०
**परिक्षीण**–दरिद्र, दीन–नि स्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि स
**कान्तार -रम्** (पु-न)–महारण्यम्–कान्तारोऽस्त्री महारण्ये–मे०
**बिल्व** (पु)–'बेल का वृक्ष', श्रीफल –बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि
**कुलाय** (पु)–नीड –कुलायो नीडमस्त्रियाम्
**कलत्रम्** (न)–भार्या–कलत्र श्रोणिभार्ययो
**अस्रम्** (न)–नेत्रजलम्–(दृग्दृष्टी) चास्रु नेत्राम्बु रोदन चास्र-मश्रु च [सूप
**आशीविष** (पु)–विषधर –आशीविषो विषधरश्चक्री व्याल सरी-
६४ **अमेध्य**–(न+मेध्य), अपवित्र–पूत पवित्र मेध्य च
**महाफल** (पु)–बिल्ववृक्ष –बिल्वे महाफल श्चयाह्व –अभि०
६५ **सव्येष्टा** (पु)–सारथि, सव्येष्ठ –सूत क्षत्ता च सारथि, सव्येष्ठ-दक्षिणस्थौ च
**पलाश** (पु)–वृक्षविशेष –पलाशे किशुक पर्ण
**वार** (पु)–अवसर –निवहावसरौ वारौ
**पुष्पम्** (न)–कुसुमम्–स्त्रिय सुमनस पुष्पम्
**पटलम्** (न)–समूह –छदिर्नेत्ररुजो क्लीब समूहे पटल न ना
**पाटल**–श्वेतरक्त–अव्यक्तरागस्त्वरुण श्वेतरक्तस्तु पाटल
**वर्ण** (पु)–राग –वर्णो द्विजादौ शुक्लादौ स्तुतौ (वर्ण तु वाऽक्षरे)

**पचेलिम**–पाकान्मुख, पक्वतामापन्न, परिणत, (फलान्मुख)
**वर्षिष्ठ**–ज्येष्ठ–ज्यष्ठ श्रेष्ठेऽतिवृद्धे च–मे०
**प्रकाण्ड** (पु)–स्कन्ध –अस्त्री प्रकाण्ट स्कन्ध स्यान्मूला-
च्छाखावधिस्तरो
**रम्भा** (स्त्री)–कदली–कदली वारणबुसा रम्भा मोचांशुमत्फला
**प्रवितत**–विस्तृत–विसृत विस्तृत ततम्
**सेवती** (स्त्री)–गुलाब इति भाषायाम्, शतपत्री
**स्तबक** (पु)–गुच्छक –स्याद् गुच्छकस्तु स्तबक
**फलिन**–फलवत्–फलवान्फलिन फली
**बर्बुर** (पु)–बबूल इति भाषाया ख्यातो वृक्षविशेष, कण्टकी,
पीत-स्वर्णपुष्प, माल्लाफल
**सम्प्रधारणम्** (न)–निर्णय, निश्चय, व्यवसाय –समौ निर्णय-
निश्चयौ
**कला** (स्त्री)–अंश, भाग –कला तु षोडशो भाग
६६ **मिथ्या** (अ)–मृषा–मृषा मिथ्या च वितथे [समे
**बाल्यम्** (न)–शिशुत्वम्–शिशुत्व शैशव बाल्य तारुण्य यौवन
**प्रभृति-ति** (अ,पु)–आदौ, आदि –प्रभृति (अव्ययम्) तदादौ इति,
प्रभृति (पुंल्लिङ्ग) तदादौ इति च शब्दार्थचिन्तामणि ।
**प्रालेयम्** (न)–हिमम–तुषारस्तुहिन हिमम्, प्रालेय मिहिका
(चाथ) हिमानी हिमसंहति
**अद्रि** (पु)–गिरि –अद्रिगोत्रगिरिग्रावा०
**उपत्यका** (स्त्री)–अद्रेरध सनिहिता भूमि –उपत्यकाद्रेरासन्ना
भूमिरूर्ध्वमधित्यका
**पापर्द्धि** (स्त्री)–आखेट, मृगया–आखेटो मृगया स्त्रियाम्
**स्तम्ब** (पु)–गुल्म –अप्रकाण्डे स्तम्बगुल्मौ (वल्ली तु व्रततिर्लता)
**शशक** (पु)–शश, मृदुरोमा-लोमा-लोमक, रोमकर्ण
**व्याघ्र** (पु)–शार्दूल –शार्दूलद्वीपिनौ व्याघ्रे

**रूपम्** (न)–आकार –रूप स्वभावे सौन्दर्ये आकारश्लोकयो-रपि–वि०

**अद्‌भुतम्** (न)–आश्चर्यकरघटना, विस्मय –विस्मयोऽद्‌भुतमाश्च-र्य चित्रमप्यय भैरवम्

**भवनम्** (न)–गृहम्, सदनम्–भवनागारमन्दिरम्

**तात्पर्यम्** (न)–आशय, भावार्थ, अभिप्राय

**कर्मकर** (पु)–यो वेतन गृहीत्वा कर्म करोति स –भरण्यभुक्कर्मकर

**वसुमती** (स्त्री)–पृथिवी–सर्वसहा वसुमती वसुधोर्वी वसुन्धरा

**शलाका** (स्त्री)–(लोहस्य) दण्डविशेष यष्टिर्वा–दण्डोऽस्त्री लगुडे पुमान्–मे०

**अश्रि -श्री** (स्त्री)–(खड्‌गादे) प्रान्तभाग –स्त्रिय पाल्यश्रिकोटय

**अश्मसार** (पु)–लोह –लोहोऽस्त्री शस्त्रक तीक्ष्ण अश्म-मारो (ऽथ मण्डूरम्)

**कीलक** (पु)–लोहशलाका, लोहदण्ड

**कुण्डलीश** (पु)–सर्पराज, फणीन्द्र –कुण्डली गूढपाच्चक्षु श्रवा काकोदर फणी

**शोणितम्** (न)–रक्तम्–रुधिरेऽसृग्लोहितास्त्ररक्तक्षतजशोणितम्

**शोणित**–शोण, रक्त, रोहित, लोहित–रक्तस्तु रोहितो माञ्जिष्ठो लोहित शोण –अभि०

६७ **विपत्-द्** (स्त्री)–आपत्-द्-त्ति –विपत्त्या विपदापदौ

**आशु** (अ)–शीघ्रम्–सत्वर चपल तूर्णमविलम्बितमाशु च

**रोष** (पु)–कोप –कोपक्रोधामर्षरोष०

**उर्वर**–सस्याढ्य–उर्वरा सर्वसस्याढ्या (स्यादूष क्षारमृत्तिका)

**उर्वी** (स्त्री)–भूमि, वसुन्धरा–वसुधोर्वी वसुन्धरा

**प्रशस्त**–उत्तम, स्तुत, परम, परार्ध्य, उत्कृष्ट, वरेण्य

**शस्यम्** (न)–अन्नम्, सस्यम्, धान्यम्, व्रीहि, स्तम्बकरि, बीजरुह

**सपत्-द्** (स्त्री)–सपत्ति –सपत्ति श्रीश्च लक्ष्मीश्च

**शेमुषी** (स्त्री)—मति —धी प्रज्ञा शेमुषी मति
**शुद्ध**—पवित्र—शुद्ध स्यात्त्रिषु केवले, निर्दोषे च पवित्रे च—मे०
**आशय** (पु)—अभिप्राय — अभिप्रायश्छन्द आशय
**अर्थ** (पु)—तत्त्वम्, वस्तु—अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु
**शिशु** (पु)—बालक, अर्भक —पृथुक शावक शिशु
**प्रतारणा** (स्त्री)—वञ्चना—वञ्चन तु प्रतारणम्—अभि०
६८ **ऋजु**—सरल, अवक्र, अजिह्म—ऋजावजिह्मप्रगुणौ
**यष्टि** (स्त्री)—दण्ड, लगुड —यष्टिर्हारलतागस्त्रभेदयोर्ध्वजदण्डके—वि०
**भुग्न**—वक्र, कुटिल—आविद्ध कुटिल भुग्न वेल्लित वक्रमित्यपि
**पुष्करम्** (न)—जलम्, सलिलम्— सलिल कमल जल पुष्कर सर्वतोमुखम्
**विपरीतम्** (अ)—प्रतिकूलम्, प्रतीपम्, विरुद्धम्, विलोमम्
**प्रकृति** (स्त्री)—स्वभाव —लिङ्गे स्वभावे प्रकृति —शा० [धव
**साधु** (पु)—सन्यासी, सज्जन —महाकुलकुलीनार्यसभ्यसज्जनसा-
**शाद्वल** (पु)—बालतृणैं हरित प्रदेश —शाद्वल शादहरिते
**मेष** (पु)—एडक —मेषवृष्णय एडके
**कोप** (पु)—क्रोध —कोपक्रोधामर्षरोष०
**आकुलित**—युक्त, आविष्ट, आकुल—व्यस्ते त्वप्रगुणाकुलौ
**मूर्धा** (पु)—शीर्षम्, मस्तक -कम्—मूर्धा ना मस्तकोऽस्त्रियाम्
**पदम्** (न)—चरण -णम्, पाद —पदङ्घ्रिश्चरणोऽस्त्रियाम्
**सुशील**—सत्स्वभाव, साधुस्वभाव—शील स्वभावे सद्वृत्ते—वि०
**पेशल**—चतुर—दक्षे तु चतुरपेशलपटव सूत्थान उष्णश्च
**पशु** (पु)—मृग —पशुर्मृगादिदेवाजे नाव्यय पशु दर्शने—मे०
६९ **उरभ्र** (पु)—मेष, एडक —मेढ्रोरभ्रोरणोर्णायु०
**समभिद्रुत**—आक्रान्त, आस्कन्दित, अभियुक्त, आधर्षित
**दुर्दशा** (स्त्री)—दुरवस्था—दशा वर्ताववस्थायाम्—वि०

**अपात्रम्** (न)—अयोग्यजन —योग्यभाजनयो पात्रम्
**महोदय**—महाशय, महानुभाव, उत्कर्षशालिन्, महाभाग-भाग्य
**भर्ता** (पु)—स्वामी, पालक —धव प्रिय पतिर्भर्ता
**रासभ** (पु)—गर्दभ —रासभा गर्दभा खरा
**सन्निभ**—सम, समान, तुल्य, सदृश, सदृक्ष, सदृक्
**विकराल**—भयानक—करालो भीषणेऽन्यवत्—वि०
**राजधानी** (स्त्री)—राजानो धीयन्तेऽस्यामिति, मूलनगरम्, राज्यस्य मुख्यनगरम्
**अत्यर्थम्** (अ)—भृशम्—अतिवेलभृशात्यर्थ० [वि०
**कवि** (पु)—कवयिता, काव्यकृत् पण्डित —कवि काव्यकरे सूरौ—
**सन्निकर्ष** (पु)—नैकटचम्, सन्निवि , सम्पर्क —सन्निवि सन्निकर्षणम्
**शाखा** (स्त्री)—वृक्षाङ्गविशेष , लता—समे शाखालते (स्कन्ध०)
**निष्कुट** (पु)—गृहसमीपकृत्रिमवनम्—गृहारामास्तु निष्कुटा
**पाटच्चर** (पु)—चौर —चौरैकागारिकस्तेन पाटच्चरमलिम्लुचा
**उचित**—युक्त—उचित प्रोक्तमभ्यस्ते मिते ज्ञाते समञ्जसे—वि०
**उपचार** (पु)—सत्कार —शुश्रूपाऽऽराधनोपास्ति वरिवस्यापरीष्टय उपचार —अभि०
७० **अभ्यागत** (पु)—अतिथि —प्राघूर्णोऽभ्यागतोऽतिथि —अभि०
**गी** (स्त्री)—वाणी—गीर्वाग्वाणी सरस्वती
**अवदानम्** (न)—पराक्रमकर्म—अवदान कर्म वृत्तम्
**अभियुक्त** (पु)—पण्डित , ज्ञानतत्पर —अभियुक्त परै रुद्धे तथा स्यादतितत्परे—वि०
**प्रतिवेशी** (पु)—समीपवर्त्ती-वासी, प्रतिवासी, प्रतिवेश -श्य
**क्षिप्रतरम्** (अ)—शीघ्रतरम्—(जवोऽथ) शीघ्र त्वरित लघु क्षिप्र-मर द्रुतम्
**आभाणक** (पु)—सूत्रम्, उक्ति , नीतिवाक्यम्, सदुपदेशवचनम्
**स्थूल**—जड—त्रिषु स्थूल जडेऽपि च

**धी** (स्त्री)–बुद्धि–धी प्रज्ञा शेमुषी मति
**दीर्घसूत्र**–आलसिन्, चिरक्रिय–दीर्घसूत्रश्चिरक्रिय
**अनुशासनम्** (न)–नियन्त्रणम्, निग्रह, नियमनम्
**परुष**–कठोर, निष्ठुर–निष्ठुर परुष ग्राम्यम्
**अभद्र**–अविनीत, असभ्य, अशिष्ट, अनार्य, धृष्ट
**उद्वेग** (पु)–सन्ताप, उद्भ्रम–मद उद्वेग उद्भ्रमे
**दृक्-ग्** (स्त्री)–दृष्टि–दृग्दृष्टी (चास्त्रु नेत्राम्बु)
**परिसर** (पु)–पर्यन्तभू–पर्यन्तभू परिसर
७१ **रौद्र**–भयङ्कर–भयङ्कर प्रतिभय रौद्र तूग्रममी त्रिषु
**निर्देश** (पु)–सङ्केत, आज्ञा–अववादस्तु निर्देश निदेश शासन च स
**अभ्याश** (पु)–समीपम्–समीपे निकटासन्नसन्निकृष्टसनीडवत्, सदेशाभ्याशसविध०
**प्रचुर**–बहु–प्रभूत प्रचुर प्राज्यम्
**अपचार** (पु)–अनिष्टम, अपकार, अपकृति, क्षति, अहितम्
**बालधि** (पु)–केशसमूहयुक्त पुच्छाग्रभाग–वालहस्तश्च बालधि
**अपसव्य**–दक्षिण–वाम शरीर सव्य स्यादपसव्य तु दक्षिणम्
**पाद** (पु)–चरण-णम्–पादाग्र प्रपद पाद पदङ्घ्रिश्चरणोऽस्त्रि-याम्
**हस्त** (पु)–कर–हस्त करे करिकरे–मे०
**निगम** (पु)–वणिक्पथ–वणिक्पथ पुर वेदो निगमा (नागरो वणिक्)
७२ **उपरत**–मृत, गतप्राण, परासु, प्राणहीन, प्रेत
**उन्मनायित**–उद्विग्न–उन्मना उत्कण्ठित–अभि०
**काष्ठम्** (न)–दारु–काष्ठ दार्विन्धन त्वेध इध्ममेध समित् स्त्रियाम्
**कुशल**–निपुण, शिक्षित–(पर्याप्तिक्षेमपुण्येषु) कुशल शिक्षिते त्रिषु

**त्वष्टा** (पु)–काष्ठतट्-ड्, वर्धकि–तक्षा तु वर्धकिस्त्वष्टा
**सावहेलम्** (अ)–अवहेला अवज्ञा तया सह–रीढावमाननावज्ञा-ऽवहेलनमसूर्क्षणम्
**सुविदग्ध**–सुकुशल–विदग्धे प्रौढस्तु प्रगल्भ प्रतिभान्वित–अभि०
**तक्षा** (पु)–काष्ठतक्षक, वर्धकि–तक्षा तु वर्धकिस्त्वष्टा
**तरु** (पु)–वृक्ष, शाखी–वृक्षो महीरुह शाखी विटपी पादपस्तरु
**स्कन्ध** (पु)–प्रकाण्ड–अस्त्री प्रकाण्ड स्कन्ध स्यात्
**सहत**–दृढसधानयुक्त, दृढसधि–दृढसधिस्तु सहत
**आकर्षक**–प्रलोभक, मोहक, चित्तापहारिन्, मनोहर
**बन्दी** (पु)–'कैदी' इति भाषायाम्–प्रग्रहोपग्रहौ बन्द्याम् [त्रयम्
**प्रवहणम्** (न)–पोत, जलयानम्–कर्णीरथ प्रवहण डयन च सम
**तरङ्ग** (पु)–लहरि-री, ऊर्मि–भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रिया वीचिरथोर्मिषु [मुखम्
**पाथ** (न)–जलम्, उदकम्– कबन्धमुदक पाथ पुष्कर सर्वतो-
७३ **वेला** (स्त्री)–जलधिजलस्य विकृति–अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि
**अवसानम्** (न)–अन्त, समाप्ति–अथावसाय शेषे स्यात् समाप्तौ निश्चयेऽपि च–मे०
**पोत** (पु)–यानपात्रम्, वहित्रम्–यानपात्रे शिशौ पोत
**परिबृंहित**–वृद्धि गत, उपचित, प्रवृद्ध, एधित, आपीन
**अवहार** (पु)–ग्राह–ग्राहोऽवहारो (नक्रस्तु)
**पृतना** (स्त्री)–सेना–पृतनानीकिनी चमू
**अध्यक्ष**–अधिकारी–अथाध्यक्षाधिकृतौ समौ
**घस्मर**–भक्षणशील, भक्षक–भक्षको घस्मरोऽद्मर
**ग्राह** (पु)–जलजन्तुविशेष, अवहार–ग्राहो ग्रहेऽवहारे च–मे०
**प्रग्रह** (पु)–बन्दी–प्रग्रहोपग्रहौ बन्द्या कारा स्याद्बन्धनालये
**झम्पा** (स्त्री)–प्लुतम्-ति, झम्प–झम्पा सम्पातपाटवम्–अभि०

**पृष्ठम्** (न)—शरीरस्य पश्चाद्भागः—पृष्ठं तु चरमं तनोः
**प्रयासः** (पुं)—परिश्रमः, आयासः—प्रयासायासव्यायामाः—अभि०
**आदिनवः-वम्** (पुं-न)—दोषः—आदी (दि) नवः पुमान् दोषे परि-क्लेशदुरन्तयोः—मे०
**वितथ**—असत्य, अनृत—वितथं त्वनृतं वचः
**दृष्टान्तः** (पुं)—उदाहरणम्, निदर्शनम्—(व्यक्तः प्राज्ञेऽपि) दृष्टा-न्तावुभौ शास्त्रनिदर्शने
**रुक्मम्** (न)—स्वर्णम्—स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् रुक्मं कार्तस्वरं जाम्बू०
**आकरः** (पुं)—रत्नाद्युत्पत्तिस्थानम्, खनिः—आकरः खनिः खानिः—अभि०
**विश्वासः** (पुं)—विस्रम्भः—समौ विस्रम्भविश्वासौ
**कार्तस्वरम्** (न)—सुवर्णम्, रुक्मम्—रुक्मं कार्तस्वरं जाम्बूनदमष्टा-पदोऽस्त्रियाम्
७४ **विपणिः** (स्त्री)—क्रय्यवस्तुशालानां पङ्क्तिः, पण्यवीथिका—वि-पणिः पण्यवीथिका [मे०
**प्लवः** (पुं)—नौः, नौका, उडुपः, भेलः—प्लवः स्यात् प्लवने भेले—
**सद्म** (न)—गृहम्—वेश्म सद्म निकेतनम्
**निबिड**—घन, सान्द्र—निबिडं तु निरन्तरं निबिरीसं घनं सान्द्रम्—अभि०
**अब्दः** (पुं)—वर्षम्, वत्सरः—संवत्सरो वत्सरोऽब्दः
**क्षुत्-द्** (स्त्री)—बुभुक्षा—अशनाया बुभुक्षा क्षुद् ग्रासस्तु कवलः पुमान्
**क्षाम**—दुर्बल—दुर्बलः कृशः क्षामः क्षीणः—अभि०
**खनिः** (स्त्री)—आकरः—खनिः स्त्रियामाकरः स्यात्
**आकरिकः** (पुं)—आखनिकः, खनकः, खनिता, खातकः, खानकः
**सेवकः** (पुं)—दासः, अनुजीवी—सेवकार्थ्यनुजीविनः

**दोषी** (पु)—अपराधी—दोष स्याद् दूषणे पापे—जने०
**मोष** (पु)—चार्यम्—दस्युनस्करमोपका
७५ **सवृत**—आच्छादित, प्रच्छादित प्रच्छन्न, अन्तर्हित, गुप्त, निह्नुत
**उत्स** (पु)—उद्गम, निर्झर—उत्स प्रस्रवण वारिप्रवाहो निर्झरो झर
**इतिवृत्तम्** (न)—पूर्ववृत्तम्, इतिहास—इतिहास पुरावृत्तम्—अभि०
**दस्यु** (पु)—स्तेन, चौर—दस्यु स्तेने च शत्रौ च—वि०
**तस्कर** (पु)—चोर—दस्युतस्करमोषका
**अपसद** (पु)—नीच—निहीनोऽपसदो जाल्म
७६ **विश्वम्** (न)—जगत्—विश्वसञ्ज्ञौ जगत्सर्वौ—शा०
**मूलम्** (न)—आधार—मूल बुध्नाऽङ्घ्रिनामक
**वसुधा** (स्त्री)—पृथ्वी, उर्वी, वसुमती—वसुधोर्वी वसुन्धरा
**लवणालय** (पु)—लवणसमुद्र—रत्नाकरो जलनिधि तस्य प्रभेदा क्षीरोदो लवणोदस्तथापरे
**पारावार** (पु)—समुद्र—समुद्रोऽब्धिरकूपार पारावार सरित्पति
**रशना** (स्त्री)—मेखला—स्त्रीकटचा मेखला काञ्ची सप्तकी रशना तथा
**वेष्टित**—आवृत, वलयित—वेष्टित स्याद्वलयित सवीत रुद्धमावृतम्
**परिधि** (पु)—परिवेष—परिवेषस्तु परिधि
**अन्तिम**—चरम—अन्तिम जघन्यमन्त्यम्—अभि०
**मानचित्रम्** (न)—देशालेख्यम्, प्रदेशचित्रम्, देशादे आलेख्यपत्रम्
**गभीर**—गम्भीर, गहन—निम्न गभीर गम्भीरम्
**पुरातन**—पुराण—पुरातनचिरन्तना
**परम्परा** (स्त्री)—परिपाटी—परम्परा परिपाटचा हिंसासन्तानयोरपि—मे०
७७ **दुग्धम्** (न)—पय—दुग्ध क्षीर पय समम्
**दधिजम्** (न)—नवनीतम्, तक्रजम्-सारम्, दधिस्नेह, हैयङ्गवीनम्

**सैन्धव -वम्** (पु-न)—सिन्धुज लवणम्—सैन्धवोऽस्त्री शीतशिव
मणिमन्थ च सिन्धुजे
**सुरा** (स्त्री)—मदिरा—सुरा हलिप्रिया हाला
**निरतिशय**—अत्यधिक, अतिमात्र, अपरिमित, अत्यर्थ, सातिशय
**कथा** (स्त्री)—आ (उपा) ख्यानम्, प्रबन्धकल्पना—प्रबन्धकल्पना
कथा
**साङ्कर्यम्** (न)—अव्यवस्था, सङ्कर—सङ्करावकरो तुल्या—अभि०
**सन्तमसम्** (न)—सर्वव्यापि तम—ध्वान्ते गाढेऽन्धतमस क्षीणेऽव-
तमस तम, विश्वक् सन्तमस (नागा)
**अस्तव्यस्तता** (स्त्री)—अव्यवस्था—अस्त क्षिप्तेऽवसिते त्रिषु ना
पश्चिमाचले, व्यस्त तु व्याकुले व्याप्ते—मे०
**तथात्वम्** (न)—तादृशी अवस्था गतिर्दशा स्थितिर्वा
**मलीमस**—मलिन—मलीमस तु मलिनम्
**तम** (न)—अन्धकार—तमिस्त्र तिमिर तम
**दरी** (स्त्री)—पर्वतस्य गुहाकारकृत्रिमविवर, कन्दर -रम्, कन्दरा-
री—दरी तु कन्दरो वा स्त्री
**प्रभा** (स्त्री)—प्रकाश, दीप्ति—स्यु प्रभारुग्रुचिस्त्विड्भा०
**सकुलम्** (न)—सङ्कर, अस्तव्यस्तता—सङ्कीर्णे सङ्कुलाकीर्णे
**मनुज** (पु)—नर—मनुष्या मानुषा मर्त्या मनुजा मानवा नरा
**ज्योतिषिक** (पु)—ज्योतिर्विद्, गणक, दैवज्ञ—सांवत्सरो ज्यौ-
(ज्यो) तिषिको दैवज्ञगणकावपि
**चक्षु** (न)—नयनम्—लोचन नयन नेत्रमीक्षण चक्षुरक्षिणी
७८ **प्रभाकर** (पु)—सूर्य—भास्कराहस्करब्रध्नप्रभाकरविभाकरा
**मेदिनी** (स्त्री)—पृथ्वी, मही—क्ष्मावनिर्मेदिनी मही [निधि
**मृगाङ्क** (पु)—चन्द्र—हिमांशुश्चन्द्रमाश्चन्द्र ग्लौर्मृगाङ्क कला-
**ज्योति** (न)—नक्षत्रम्, भम्—ज्योतिर्भद्योतदृष्टिषु
**कमनीय**—सुन्दर—काम्य कम्र कमनीयम्—अभि०

**युगपत्-द्**(अ)—एकस्मिन्काले—(तदा तदानी) युगपदेकदा (सर्वदा सदा)

**सप्लव** (पु)—सङ्कर, परिप्लव—आकुलेऽपि परिप्लव—वि०

**विकट**—विकराल—विशाले विकराले च विकट कवयो विदु—शा०

**कोलाहल** (पु)—बहुभि कृत महारव (स्पष्टशब्द), कलकल—कोलाहल कलकल

**सुष्ठु**(अ)—सम्यक्, प्रशस्तप्रकारेण—सुष्ठु प्रशसनेऽपि स्यादत्यर्थे च निगद्यते—मे०

**आवश्यक**—अपरिहार्य, अनिवार्य, अपेक्षित, अवश्यकाङ्क्षणीय

७९ **उपस्कर** (पु)—सामग्री, द्रव्यम्, उपकरणम्

**उपकरणम्**(न)—साधनद्रव्यम्, कार्यसाधनम्, क्षुद्र करणम्, यन्त्रम्

**कच्चर**—मलिन—मलीमस तु मलिन कच्चर मलदूषितम्

**प्रकार** (पु)—भेद—प्रकारौ भेदसादृश्ये

**भेद** (पु)—विशेष, प्रकारविशेष—भेदो द्वैधे विशेषे स्यात्—मे०

**पस्त्यम्**(न)—गृहम्, सदनम्—निशान्तपस्त्यसदनम्

**मसी**(स्त्री)—स्याही इति भाषायाम्—मलिनाम्बु मषी मसी—अभि०

**निर्णिक्त**—स्वच्छ, शोधित—निर्णिक्त शोधित मृष्टम्

**सुषम**—शोभन—सुन्दर रुचिर चारु सुषम साधु शोभनम्

**सङ्घर्ष** (पु)—कलह, सघर्षणम्—सङ्घर्षशब्दमिच्छन्ति स्पर्धाया घर्षणेऽपि च—शा०

**अशुकम्**(न)—वस्त्रम्—वस्त्रमाच्छादन वासश्चैल वसनमशुकम्

**कालुष्यम्**(न)—मलिनत्वम्, मलमिश्रत्वम्—कलुषोऽनच्छ आविल

**विलोप** (पु)—भ्रश, नाश, हानि, अलाभ, अपाय, लोप, प्रभ्रश

**अनुसन्धानम्**(न)—अन्वेषणम्, निरूपणम्, मार्गणम्, विचय

**सुविन्यसनम्**(न)—सुव्यवस्थापनम्, सुष्ठु व्यूहनम्, अनुरूपा रचना सविधा वा

**आयास** (पु)—परिश्रम, प्रयास—प्रयासायासव्यायामा—अभि०

**श्री** (स्त्री)—सपत्ति —सपत्ति श्रीश्च लक्ष्मीश्च
**समृद्धि** (स्त्री)—उपचय, एधा—एधा समृद्धौ (स्फुरणे)
**देश** (पु)—जनपद, राष्ट्रम्—नीवृज्जनपदो देश०
**अधिशासिता** (पु)—शासक, अधिपति, अधीश, अधीश्वर
**प्रधान**—प्रमुख—क्लीबे प्रधान प्रमुख० मुख्यवर्यवरेण्याश्च
**वृत्ति** (स्त्री)—जीविका—आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने
८० **मनाक्** (अ)—किञ्चित्—किञ्चिदीषन्मनागल्पे प्रेत्यामुत्र भवान्तरे
**निदर्शनम्** (न)—उदाहरणम्, दृष्टान्त —(व्यक्त प्राज्ञेऽपि) दृष्टान्तावुभौ शास्त्रनिदर्शने
**व्यत्यास** (पु)—(क्रमस्य) विपरीतता व्यत्यय —स्याद्व्यत्यासो विपर्यासो व्यत्ययश्च विपर्यये [सम त्रयम्
**उत्पात** (पु)—उपद्रव, उपसर्ग —अजन्य क्लीबमुत्पात उपसर्ग
**परिणति** (स्त्री)—परिणाम, पर्यवसानम्, अन्त, फलम्
**सायात्रिक** (पु)—जलयात्रिक, नौगामी,-यायी, पोतगामी,-यायी इति आप्टेकोष, नौकया वाणिज्यकारी—'सायात्रिक पोतवणिक्' इत्यमर
**गृहमेधी** (पु)—गृहस्थ —ज्येष्ठाश्रमी गृहमेधी—अभि०
८१ **कृषीवल** (पु)—कृषक, कृषिक, कृषाण —कृषिकश्च कृषीवल
**शाला** (स्त्री)—कक्ष, कोष्ठ, कुटी—वास कुटी द्वयो शाला
**प्रतराम्** (अ)—सु-नि-तराम्, अत्यधिकम्, अत्यन्तम्, अतिमात्रम्
**शरत्-द्** (स्त्री)—वर्षम्—सवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समा
**असाम्प्रत**—न+साम्प्रत, अयुक्त—युक्ते द्वे साम्प्रत स्थाने
**निमिष** (पु)—क्षण —निमेषनिमिषौ कालप्रभेदेऽक्षिनिमीलने
**विचक्षण**—धीमत्—धीमान् सूरी कृती कृष्टिर्लब्धवर्णो विचक्षण
**क्षेत्रपति** (पु)—क्षेत्र केदार वप्रो वा तस्य पति, कृषक —पुनपुसकयोर्वप्र केदार क्षेत्रमस्य तु

८२ **ऋते**(अ)–विना–पृथग्विनान्तरेणर्ते
**अलम्**(अ)–समर्थ–अल भूषणपर्याप्तिशक्तिवारणवाचकम्
**शिरा**(स्त्री)–नाडी–नाडी तु धमनी शिरा
**मासपेशी**(स्त्री)–मासपिण्डी–पेशी पललपिण्डचा स्यात्–वि०
**वपु** (न)–शरीरम्–गात्र वपु सहनन शरीर वर्ष्म विग्रह
**अवयव** (पु)–अङ्गम्–अङ्ग प्रतीकोऽवयवोऽपघनोऽथ कलेवरम्
८३ **धी** (स्त्री)–बुद्धि–बुद्धिर्मनीषा धिषणा धी प्रज्ञा शेमुषी मति
**अनुवर्तनम्**(न)–अनुसरणम्, अनुरोध–अनुरोधोऽनुवर्तनम्
**प्रेष्य-प्रैष्य** (पु)–सेवक, परिचारक–नियोग्यकिङ्करप्रैष्य०
**पावक** (पु)–अग्नि–आश्रयाशो बृहद्भानु कृशानु पावकोऽनल
**सार्थ** (पु)–वणिग्गण–सार्थो वृन्दे वणिग्गणे–अने०
**अध्वग** (पु)–पथिक–अध्वनीनोऽध्वगोऽध्वन्य
**गर्ह्य**–निन्द्य, कुत्सित–कुपूयकुत्सितावद्यखेटगर्ह्याणका समा
**त्वरा**(स्त्री)–सवेग, सभ्रम–(आरम्भ) सभ्रमस्त्वरा [त्पर्यम्
८४ **अभिधेयम्**(न)–अर्थ, वाच्यम्, आशय, अभिप्राय, भाव ता-
**कर्मकर** (पु)–श्रमिक, वैतनिक–भतको भृतिभुक्कर्मकरो वैत-
निकोऽपि स
**कर्मठ**–कर्मशूर–स कार्म कर्मशीलो य कर्मशूरस्तु कर्मठ
**कृषक**.(पु)–क्षेत्रपाल, क्षेत्राजीव, क्षेत्रिक, क्षेत्री
**कुटीर**-**रम्**(न)–शाला–वास कुटी द्वयो शाला
**ऊर्जस्विन्**–बलिष्ठ–ऊर्जस्वल स्यादूर्जस्वी य ऊर्जातिशयान्वित
**उपवनम्**(न)–कृत्रिम वनम्–आराम स्यादुपवन कृत्रिम वनमेव
यत्
**प्रसू** (स्त्री)–माता–जनयित्री प्रसूर्माता जननी भगिनी स्वसा
**सुमनस** (स्त्री)–पुष्पम्–स्त्रिय सुमनस पुष्प प्रसून कुसुम सुमम्
**मकरन्द** (पु)–पुष्परस–मकरन्द पुष्परस पराग सुमनोरज
**दया**(स्त्री)–कृपा–कृपा दयानुकम्पा स्यात्, कारुण्य करुणा घृणा

**वनिता** (स्त्री)—महिला—प्रतीपदर्शिनी वामा वनिता महिला तथा
**देव** (पु)—ईश्वर, महादेव—अमरा निजरा देवा ईश्वर शर्व ईशान, वामदेवो महादव
८५ **वन्दनम्** (न)—स्तुति, अभिवादनम्, नमस्कार, सभाजनम्, प्रणिपात
**उत्सङ्ग** (पु)—क्रोड-डम्—क्रोड उत्सङ्ग इत्यपि—अभि०
**समुपान्तम्** (अ)—निकटम्—उपान्त निकटोपकण्ठे—अभि०
**अपत्यम्** (न)—सन्तति, पुत्र पुत्री वा—तोकापत्यप्रसूतय—शा०
**नन्दन** (पु)—सुत—नन्दनो हर्षके सुते—मे० [शिशु
**शिशु** (पु)—बालक—पोत पाकोऽर्भको डिम्भ पृथुक शावक
**वलभि-भी** (स्त्री)—छादनार्थ वक्रदारु—गोपानसी तु वलभी छादने वक्रदारुणि
**पर्यङ्किका** (स्त्री)—खट्वा—शयनमञ्चपर्यङ्कपल्यङ्का खट्वया समा
**भर** (पु)—भार, वीवध—भरोऽतिशयभारयो—वि०
**परिवार** (पु)—कुटुम्बम्, परिजन—परिवार परिजने—मे०
**पृथुक** (पु)—शिशु—पृथुक शावक शिशु
**तृणद्रुम** (पु)—ताल, तालतरु—खर्जूर केतकी ताली खर्जूरी च तृणद्रुमा.
८६ **सन्देश** (पु)—वाचिकम्, उपदेश, दिष्टम्, सन्देशवाक्, वार्ता, उदन्त, प्रवृत्ति, वृत्तान्त
**वर्म** (न)—कवच—तनुत्र वर्म दशनम् जगर कवचोऽस्त्रियाम्
**आमय** (पु)—रोग, गद—रोगव्याधिगदामया
**निशाचर** (पु)—राक्षस—निशाचरस्तु रक्षसि—मे०
**दैत्य** (पु)—असुर—असुरा दैत्यदैतेयदनुजेन्द्रारिदानवा
**अदभ्र**—बहु, प्रभूत—प्रभूत प्रचुर प्राज्यमदभ्र बहुल बहु
**उपद्रव** (पु)—उपद्रव इति भाषायाम्, उत्पात—उपसर्ग उपद्रव—अभि०

**स्वान्तम्** (न)–मन –चित्त तु चेतो हृदय स्वान्त हृन्मानस मन
**सक्षोभ** (पु)–उपद्रव, उपप्लव, उद्वेग, विक्षोभ, प्रक्षोभ, व्याकुलता
**प्रभूत**–बहु, प्रचुर–प्रभूत प्रचुर प्राज्यम्
८७ **भसितम्** (न)–भस्म–भस्म तु स्याद् भूतिर्भसितम्–अभि०
**पावन**–पवित्र–स्यात् पावन पावयिता प्रायश्चित्त तु पावन–शा०
**भस्म** (न)–भूति, भसितम्–भूतिर्भस्मनि सम्पत्तौ–मे०
**वीर्यम्** (न)–प्रभाव –वीर्य शुक्रे प्रभावे च तेज सामर्थ्ययोरपि–मे०
**सरोरुहम्** (न)–कमलम्–सरोजिनी सरोरुहे–अने०
**प्रसन्न**–अच्छ, निर्मल–त्रिष्वागावात्प्रसन्नोऽच्छ
**समुदाय** (पु)–समूह, समवाय –समुदाय समूहे स्यात्–मे०
**हीन**–नीच, गर्ह्य–हीनन्यूनावूनगर्ह्यौ (वेगिशूरौ तरस्विनौ)
**वृषल** (पु)–शूद्र –शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजा
**अतिरिक्त**–अधिक, समधिक–अतिरिक्त समधिक
८८ **सूरि** (पु)–कवि, पण्डित –सख्यावान् पण्डित कवि धीमान्सूरि कृती कृष्टि
**पद्माकर** (पु)–तडाग –पद्माकरस्तडागोऽस्त्री कासार सरसी सर
**पुष्करिणी** (स्त्री)–जलाशय –पुष्करिणी सरोजिन्या हस्तिन्याञ्च जलाशये–वि०
**स्वसा** (स्त्री)–भगिनी–(जननी) भगिनी स्वसा
**सहोदर** (पु)–भ्राता–भ्राता तु स्यात्सहोदर –अभि०
**प्रतोली** (स्त्री)–रथ्या, वीथि -थी–रथ्या प्रतोली विशिखा
**अभ्यर्ण**–समीपस्थ–समीपे निकटासन्न० उपकण्ठान्तिकाभ्यर्ण०
**प्रसृता** (स्त्री)–जङ्घा–जङ्घा तु प्रसृता जानूरुपर्वाष्ठीवदस्त्रियाम्
**प्रश्रय** (पु)–विनय, सत्कार, आदर, सम्मान, सत्कृति
८९ **उत्तरदायित्वम्** (न)–अनुयोगाधीनत्वम्, अनुयोज्यता, प्रतिवाच्यता, प्रष्टव्यता, भार, भर, धू

**मिथ्या** (अ)—मृषा—मृषा मिथ्या च वितथे यथार्थं तु यथातथम्
**अभिमानिन्**—अहंकारिन्, गर्विन्—गर्वोऽभिमानोऽहङ्कार
**अयोग्य**—न+योग्य, अनर्ह, अपात्र—योग्य प्रवीणयोगार्होपायि-
शक्तेषु वाच्यवत्—मे०
**विवेचनम्** (न)—विवेक, समीक्षणम्, समीक्षा, अवधारणम्-णा,
विचारण-णा, परिच्छेद [मानसौकस
**हंस** (पु)—हंस इति भाषायाम्—हंसास्तु श्वेतगरुतश्चक्राङ्गा
**वासर** (पु)—दिवस—दस्रा दिनाहनी वा तु क्लीबे दिवसवासरौ
**विकस्वर**—विकसित, विकासिन्, उत्फुल्ल, सम्फुल्ल—(ज्ञाना तु
विदुरो विन्दु) विकासी तु विकस्वर
**सारसम्** (न)—कमलम्—पङ्केरुह तामरस सारस सरसीरुहम्
**सरसी** (स्त्री)—तडाग—कासार सरसी सर
९० **तरस्विन्**—वेगवत्, वेगिन्—वेगिशूरौ तरस्विनौ
**दुर्दम्य**—अदम्य, दुर्धर, दुर्निवार, दुर्निग्रह, दुर्दान्त
**रय** (पु)—वेग, जव—(शरीरस्था इमे) रहस्तरसी तु रय स्यद
**अनूप**—जलप्राय—जलप्रायमनूप स्यात् पुंसि कच्छस्तथाविध
**भिषक्-ग्** (पु)—वैद्य—रोगहार्यगदङ्कारो भिषग्वैद्यौ चिकित्सके
**ताप** (पु)—दु खम्, सन्ताप—ताप सन्तापकृच्छ्रयो—मे०
**सतति** (स्त्री)—समूह, पङ्क्ति—सन्तति पङ्क्तिविस्तारगोत्रेषु
कविभि स्मृता—वि०
**क्षुधा** (स्त्री)—बुभुक्षा—क्षुज्जठराग्निजा पीडा—अभि०
**दारिद्र्यम्** (न)—निर्धनत्वम्, दैन्यम्—दरिद्रो दुर्विधो दुःस्थ—अभि०
**निदानम्** (न)—आदिकारणम्—हेतुर्ना कारण बीज निदान त्वादि-
कारणम्
९१ **क्षुप** (पु)—वृक्षक—स्थाणुर्वा ना ध्रुव शङ्कुर्ह्रस्वशाखाशिफ क्षुप
**वसति** (स्त्री)—गृहम्, वेश्म—वसती रात्रिवेश्मनो [प्रतिच्छाया
**प्रतिमा** (स्त्री)—मूर्त्ति—प्रतिमान प्रतिबिम्ब प्रतिमा प्रतियातना

**प्रतिकृति** (स्त्री)–चित्रम्, आलेख्यम्, प्रतिमा, प्रतिच्छाया–प्रति-
क्रुति प्रतीकारे प्रतिमायाञ्च पूजने–वि०
**मुत्-द्** (स्त्री)–हर्ष–मुत्प्रीति प्रमदो हर्ष प्रमोदामोदसमदा

इति शम्

## संशोधनम्

| पुट | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २९ | १४ | सर्वत प्रसक्त | सर्वत -प्रसक्त |
| २९ | २२ | दिवगते | दिव गते |
| ३४ | ११ | चैकदोध्मानम् | चैकदोद्ध्मानम् |
| ४० | १५ | अन्तेरण | अन्तरेण |
| ४३ | ६ | पारणान्ते | पारणाया |
| ४८ | १८ | असिञ्चताम | असिञ्चताम् |
| ५० | २२ | दूरदर्शाता | दूरदर्शिता |
| ५९ | १८ | मुहुरपि | पुनरपि |
| ६२ | ११ | व्यपेक्षमाणो | व्यपेक्षमाण |